योगः कर्मसु कौशलम्

AHNIK VARTA PATRAM
Email - ahnikvartapatram@gmail.com

# आह्निक वार्ता पत्रम्

RNI No. : UPSAN/2018/76680

वर्ष-3 अंक 275 संस्कृत दैनिक/ प्रात; संस्करण | प्रयागराज 30 जुलाई 2021 शुक्रवार | पृष्ठ-4 | मूल्य- 2 रुपये

### सुभाषितम्

सेवितव्यो महावृक्षः
फ़लच्छाया समन्वितः।
यदि देवाद फलं नास्ति,छाया
केन निवार्यते॥

अर्थ – एक विशाल वृक्ष की सेवा करनी चाहिए। क्योंकि वह फल और छाया से युक्त होता है। यदि किसी दुर्भाग्य से फल नहीं देता तो उसकी छाया कोई नहीं रोक सकता है।

### संक्षिप्तवार्ताः

#### कोविड्व्यापनं 22 जनपदेषु अतितीव्रं भवति

**नवदेहली।** केरलं समेत्य भारतस्य विविधराज्यानां 22 जनपदेषु कोविड्व्यापनम् अतितीव्रं वर्तते इति नीतिआयोगस्य सदस्यः डो.वि के पोल् वर्यः न्यवेदयत्। तीव्रव्यापनजनपदेषु सप्त केरले वर्तन्ते। अन्ये 15 जनपदाः उत्तरपूर्वीयराज्येषु भवन्ति। केरलस्य कोविड्व्यापने नूतनतरङ्गस्य काचित् सूचना शङ्क्त इति डो. पोलवर्येण उक्तम्। तत्र एकस्मात् कोविड्रोगिणः 1.2 पुरुषं विषाणुः व्याप्यते। विषाणोः व्यापनमानमपि केरले अधिकाधिकमिति तेनोक्तम्।

तृतीचरणाय नवीन–ऊर्जया सह नूतनदिङ् दास्यते राज्यसर्वकारः स्वास्थ्यविभागेन सह संयोज्य जनपदस्तरे जागरूकताकार्यक्रमः चालयिष्यति

# जुलाई मासस्य त्रिंशदिनांकतः ‘मिशन–शक्तेः’ तृतीय चरणं प्राप्स्यते उत्तर प्रदेशः

## महिलाभ्यः पुत्रीभ्यः च विभागैः परस्पर समन्वयेन च प्राप्स्यते योजनानां लाभः

## महिलानां पुत्रीणां च सम्बद्धासु आपराधिक घटनासु झटिति प्रक्रियायाः निर्देशः दत्तः

**लखनऊ।** महिलानां सुरक्षायै सशक्तिकरणाय सङ्कल्पितः राज्यसर्वकारेण जुलाईमास्य त्रिंशत् दिनाङ्कतः प्रदेशे ‘मिशन–शक्तेः’ तृतीयचरणस्य प्रक्षेपणं क्रियते । एतन्निमित्तं सिद्धता पूर्णा कृता । सर्वकारस्य अभिलाषा अस्ति यत् प्रदेशस्य महिलाः शिक्षिताः, सशक्ताः, स्वावलम्बिनः, आत्मनिर्भराः च भवेयुः । तेभ्यः सुरक्षाप्रदानं, तेषां स्वास्थ्यस्य संरक्षणेन सह शिक्षायाः क्षेत्रे अग्रे वर्धनीयम् अस्ति । महिला स्वयं सहायता समूहः, बीसीसखी सदृशयोजनाभिः महिलाभ्यः स्वावलम्बनस्य मार्गः दृष्टः । मुख्यमन्त्री कन्या सुमङ्गल योजना, मुख्यमन्त्री सामूहिक विवाह सदृश योजनाभिः बालिकाभ्यः तेषां अभिभावकेभ्यः वृहद् समर्थनं दत्तम् । एतस्मिन् प्रदेशे मिशनशक्त्याः प्रथमद्वितीयोः चरणस्य सफलतायाः अनन्तरं मुख्यमन्त्रिणा योगिना आदित्यनाथेन सम्बद्धविभागाय अधिकारिभ्यः च मिशनशक्त्याभियानाय नवीन–ऊजऱ्या सह नूतनदिशं दातुं निर्देशः दत्तः । मिशनशक्तेः तृतीचरणाय नवीन–ऊर्जया सह नूतनदिङ् दास्यते । एषः कार्यक्रमः स्वास्थ्यविभागेन सह योक्ष्यते । जनपद स्तरे जागरूकताकार्यक्रमाः आयोजयिष्यन्ते । एतेषु विद्यालयस्य महाविद्यालयस्य च अध्यापकाः प्राचार्याश्चापि योजयिष्यन्ते । स्वास्थ्य, शिक्षा, ग्राम्यविकास पञ्चायती राजः, गृहं, महिलाबालविकासः चेत्यादिभिः विभागैः परस्परं समन्वयेन योजनां सफलीकर्तुम् अधिकारिणः संलग्नाः सन्ति । सुरक्षाम् उद्दिश्य गभीर-राज्य सर्वकारेण महिलाभिः बालिकाभिः सम्बद्धासु आपराधिक घटनासु संवेदनशीलतया सह झटिति प्रक्रिया सञ्चालयितुं निर्दिष्टा ।



## अक्टूबर मासस्य सप्तदशदिनाङ्के प्रदेशे आरब्धः मिशनशक्ति कार्यक्रमः

राज्यसर्वकारेण प्रदेशे मिशनशक्तिः सदृशवृहदभियानम् आरभ्य तेषां गतिं विकासस्य पथेन सह योक्तुं वृहद्कार्यं कृतम् । अस्य प्रक्रमस्य प्रथमद्वितीयचरणयोः सफलतायाः अनन्तरं प्रदेशे जुलाईमासस्य त्रिंशदिनाङ्क्तः पुनः सर्वकारेण मिशनशक्तेः नूतन चरणं आरभ्यते । अवधातव्यम् अस्ति यत् 2020तमे वर्षे अक्टूबर मासस्य सप्तदशदिनाङ्के सर्वकारेण मिशनशक्तियोजना प्रदेशे आरब्धा । योजनायाः द्वितीयचरणं प्रचलति ।

# उत्तरप्रदेशस्य ग्रामे–ग्रामे सज्जीभविष्यन्ति क्रीडकाः

## राष्ट्रिय–अन्ताराष्ट्रिय–स्पर्धासु ग्रामस्य युवानः अपि भवितुं शक्ष्यन्ते उपस्थिताः



उत्तरप्रदेशे ग्रामीणमञ्चानां प्रसारितः जालः, एकाशीतिग्रामीणमञ्चानाम् अभवत् स्थापना

**लखनऊ।** राज्यसर्वकारेण ग्रामे–ग्रामे क्रीडकाः निर्मीयन्ते । एतन्निमित्तं तेन प्रदेशे ग्रामीणमञ्चानां जालः प्रसारितः । एकाशीतिग्रामीणमञ्चानाम् स्थापना कारिता यद्यपि विंशतिमञ्चानां निर्माणकार्यं प्रचलति । एतेषु मञ्चेषु पूर्वतन् अपेक्षया अधिकानां क्रीडानां सुविधा प्रदीयते । क्रीडकानाम् आहार आरभ्य तेषां प्रशिक्षणाय प्रत्येकं सम्भवाः प्रबन्धाः क्रियन्ते ।

सर्वकारः ग्रामस्य क्रीडाप्रतिभानां परिशोधनेन सह तेभ्यः राष्ट्रिय–अन्ताराष्ट्रियस्तरे आयोजयिष्यमाणासु स्पर्धासु कीर्तिमानं स्थापयितुम् इच्छति। खेलो इण्डिया इति क्रीडानां विकासाय राष्ट्रियकार्यक्रमान्तर्गतं प्रदेशस्य क्रीडकान् अग्रे वर्धनस्य वृहद् प्रक्रमः कृतः । अस्यान्तर्गतं ग्रामीममञ्चानां निर्माणकार्यं तीव्रतया आरब्धम् ।

### ग्रामीण युवभ्यः क्रीडायाः अवसरः दीयते, उत्तरप्रदेशसर्वकारेण क्रीडायाः सुविधावर्धनेन सह प्रशिक्षणे अपि विशेषावधानम्

ग्रामीणयुवभ्यः क्रीडासुविधा प्रदत्ता । तान् प्रोत्साहायितुं प्रशिक्षितप्रशिक्षकाः अपि नियोजिताः। उत्तर प्रदेशस्य दायित्वं यदारभ्य मुख्यमन्त्रिणा योगिना आदित्यनाथेन स्वीकृतं तदारभ्य अधुनापर्यन्तं प्रदेशे क्रीडकानां सुविधासु निरन्तरं वर्धनं भवति । क्रीडकेभ्यः क्रीडायाः अवसराः प्राप्यन्ते अपि च तेभ्यः क्रीडायां विशिष्टताधारे विभिन्नसर्वकारिविभागे वृत्तिः अपि प्राप्ताः। सर्वकारस्य प्रयासानां प्रभावः अस्ति यत् अधुना उत्तर प्रदेशस्य ग्रामात्–ग्रामात् निर्गच्छन्तीभ्यः प्रतिभाभ्यः क्रीडासु अधिकाः अवसराः प्राप्यन्ते। ते स्वकीयां क्रीडाम् उत्तमां कर्तुं संलग्नाः । अन्यप्रदेशेषु तेषां पलायनम् अपि नियन्त्रितम् ।

### विकासखण्डतः स्वीकृत्य राज्यसर्वकारपर्यन्तम् आरब्धा क्रीडास्पर्धा

प्रदेशे ग्रामीणक्रीडानां प्रोत्साहनाय सर्वकारेण पञ्चक्रीडाविधानां स्पर्धा अपि आरब्धा । अस्यान्तर्गतम् एथलेटिक्स, बॉलीबाल, कबड्डी, भारोत्तोलन, कुश्ती चेत्यादिनां स्पर्धानाम् आयोजनं विकासखण्डस्तरे जनपदस्तरे च क्रियते । एतदेव न मण्डलस्तरीयानां, क्षेत्रस्तरीयानां, राज्यस्तरीयानां च क्रीडाप्रतियोगितानाम् आयोजनेन क्रीडकेभ्यः पूर्वतनया अपेक्षया अधिकाः क्रीडायाः अवसराः प्राप्ताः ।

# विलम्बो न भविष्यति, आगामिनि संवत्सरे चन्द्रयान् 3 विक्षेपितुं ऐ एस् आरओ संस्थया योजना आविष्कृता

**नवदेहली।** कोविड् 19 रोगव्यापनहेतुना विलम्बायितं चन्द्रयान् 3 दौत्यं पूर्तीकर्तुं ऐ एस् आरओ संस्था सुसज्जा अभवत् । 2022 संवत्सरस्य तृतीयपादे विक्षेपणं कर्तुमेव ऐ एस् आ ʹओ संस्थायाः लक्ष्यः। ऐ एस् आरओ दौत्याय प्रक्रमाः प्रगतिमाप्नोति इति नूतन समयक्रमं प्रकाशयन् शास् वैज्ञानिकप्रौद्योगिकमन्त्रिणा डो जितेन्द्रसिंहेन उक्तम्। चन्द्रयान् 3 अस्मिन् संवत्सरे विक्षेपयितुमेव पूर्वं निश्चितम्। अप्रतीक्षिततया जातेन कोविड् 19 व्यापनेन तथा पिधानेन एव चन्द्रयान् 3 विक्षेपणं विलम्बायितम् ।



## कर्णाटके नूतनः मुख्यमन्त्री - बसवराजबोम्मे पदं प्राप्तवान्



**बेङ्गलुरू।** कर्णाटकराज्यस्य 26 तम मुख्यमन्त्रिरूपेण भाजपादलनेता बसवराजबोम्मे इत्याख्यः शपथवाचनं कृत्वा पदं प्राप्तवान्। राजभवनस्य ’ग्लास् हौस’ मध्ये आयोजिते कार्यक्रमे राज्यपालः तावर्चन्द् गहलोटः शपथवाचनं कारितवान्। 2019 तमे मुख्यमन्त्रिपदं प्राप्तवान् यद्यूरप्पः शासनदले सञ्जातेन कलहेन गतदिने त्यागपत्रं समर्पितवानासीत्।

# जम्मूकाश्मीरेषु हिमाचलप्रदेशेषु च मेघविस्फोटे षोडश जनाः मारिताः, बहवः जनाः व्रणिताश्च

**श्रीनगरम् ।** जम्मूकाश्मीरेषु किष्त्वा ʹतथा हिमाचलप्रदेशे लाहोल् - स्पिति प्रदेशे च जातेषु मेघस्फोटेषु षोडश जनाः मारिताः विंशति जनाः व्रणिताश्च। अतिवृष्ट्यां होन्सा ʹग्रामे षट् संख्याकानि गृहाणि च निपतिताः। रक्षाप्रवर्तनाय भारतीय सैन्यान् तथा दुरन्तनिवारणसेनाः च विन्यस्ताः। अवशिष्टाभ्यः सप्त मृतशरीराणि च प्रत्यग्रहीताः । द्वादश जनाः अवशिष्टेषु अप्रत्यक्षाः जाताः इति सन्देहः अस्ति। प्रभाते जलाशयेषु जलोपप्लुवः अभवत्। ग्रामजनाः सर्वे निद्रायां निमग्नाः आसन्। अत एव मरणसंख्या अधिका जाता। प्लावितगृहाणि सर्वाणि जलाशयसमीपवर्तिन्यः आसन्।



## सम्पादकीयम्

# ये प्रकृति विरुद्धमाचरन्ति ते दण्डितवन्तः

ये प्रकृति विरुद्धमाचरन्ति ते दण्डितवन्तः । आतङ्कवादिनः आततायिनो वा सृष्टिकालात् एव मधुकैटभ प्रभृतयो दानवाः आसन्। पश्चात् हिरण्याक्षहिरण्यकशिपुसदृशाः दैत्याः सत्ययुगे, रावणसदृशा त्रेतायुगे कंसजरासन्धदन्तवक्रशिशुपालदुर्योधनसदृशा द्वापरयुगे चासन्। कलियुगेऽप्यनेके राक्षसधर्मपालका आततायिनो भूयान्सोऽभवान्। साम्प्रतमपि तैः सर्वाणि राष्ट्राणि पीडितानि सन्ति। महाकविकालिदासेन ऋतुसंहारकुमारसम्भवरघुवंशमेघदूतेति काव्यचतुष्टयम्, मालवकाग्निमित्रविक्रमोर्वशीयाभिज्ञानशाकुन्तलेति नाटकत्रयं रचितम्। तत्र महाकविना कुमारसम्भवे रघुवंशे इति काव्यद्वये, मालविकाग्निमित्रे विक्रमोर्वशीयेऽभिज्ञानशाकुन्तले चेति नाटकत्रये दैत्यसंस्कृतेरुपरि मानवसंस्कृतेर्देवसंस्कृतेश्च विजयो वर्णितः। तस्या आतङ्कवादसंस्कृतेश्च पराजयो दर्शितः।

अस्माकं वैदिकसंस्कृतेः मान्यतानुसारेणाखिलं जगद् देवताधीनं वर्त्तते। प्रकृतेः तत्त्कार्यविशेषाभिमानिनो देवाः स्वकार्यं कुर्वन्तः कारयन्तश्च प्रकृते नियमान् पालयन्तः तस्याः सन्तुलनं रक्षन्ति। जगति यदा कश्चिद्दुष्टः प्रकृतिविरुद्धमाचरति तदा ते तं दण्डयित्वा प्रकृतिकार्ये नियोजयन्ति। किन्तु यदा केनचित् अतीवप्रबलेन दिव्यशक्तिसम्पन्नेन जगतो नियमा ध्वंस्यन्ते लोकाः पीडयन्ते तं वारयितुमसमर्था देवा त्रिदेवपार्श्वे गत्वा तस्यारापत्तोः शमनोपायं चिन्तयन्ति। यतो हि त्रिगुणात्मिका सृष्टिः सत्त्वगुणनियन्त्रको नारायणो रजोगुणनियन्त्रको ब्रह्मा तमोगुण नियन्त्रको महादेवो रुद्रः। एते च जगति गुणत्रयस्य परमावश्यकं स्वरूपं रक्षन्ति सनातनधर्मविदूषकतत्त्वानि चापसारयन्ति नाशयन्ति च।

# विघ्नहर्ता गजाननः

## वस्तु मम पतिः अस्ति, तथ्यम् अपरीक्ष्य एव, सः मम सुतम् आक्रान्तुं प्रायतत, अहं मदीय-पुत्रस्य गौरवं रक्षिष्यामि’

### आदिदेवस्य गणेशस्य विस्मयकारिणः रूपान्तरस्य कथा

**डॉ. बलदेवानन्द-सागरः**

देवाधिदेवः शिवः स्वीय-अर्धाङ्गिन्या पार्वत्या सार्धं कैलास-पर्वते निवसति। एकदा, महादेवः तत्र नासीत्, तदा भगवती पार्वती स्नानार्थं सज्जा भवन्ती सती सहसा विचारितवती यत् ‘कदाचित् स्नान-कर्मणि निरतायां मयि कश्चन भवनम् इदं समुपागच्छेत् !’

किञ्चित् कालं यावत् गहनं परिशील्य सा समुपायम् एकं निर्धारितवती। स्नानारम्भात् पूर्वं, सा स्वीय-देहे लेपितं हरिद्रावलेपम् अपसार्य तम् एकस्मिन् पात्रे न्यदधात्। ततः परम्, तल्लेप-कर्दमात् सा एकस्य किशोरस्य बालकस्य प्रतिमां निर्मितवती। तदनु, भगवती पार्वती तस्यां प्रतिमायां जीवनम् अस्थापयत्। सा प्रतिमा रमणीय-किशोर-बालकत्वेन रूपान्तरिता जाता। भगवती पार्वती सगौरवं शनैः च अवदत् यत् - ‘त्वं मम सुतः! केवलं मामकीनः!’.

‘मात ! केन प्रकारेण अत्रभवती सेवनीया ’ तस्याः सुतोऽयम् अपृच्छत्। पार्वती तं बालं भवन-प्रवेश-द्वारं सन्नीय लौह-दण्डम् एकं प्रदाय निरदिशत् – ‘सुत ! अत्र प्रहरित्वं विदधातु। मम अनुज्ञां विना न त्वया कश्चन अन्तः प्रवेशार्थम् अनुमन्तव्यः’ तत्पश्चात्, भगवती पार्वती भवनान्तः प्रविष्टा। किञ्चित्-कालानन्तरं कश्चन तत्र आयातः। अनुमिनोतु, कोऽयं सम्भवेत्...? साक्षात् परम-शिवः ! यथैव परम-शिवः भवनं प्रवेष्टुं समुद्यतः, तत्रस्थेन किशोरेण असौ अवरुद्धः। ’मम माता, भगवती पार्वती न कमपि जनम् अन्तःप्रवेशार्थं माम् आज्ञप्तवती।’

परम-शिवः स्वीय-हास्यम् अवरोद्धुं नैव अपारयत्। ’हा...हा...हा... भगवती पार्वती साम्प्रतं पुत्रवती, तच्च, मम अवगमनं विना !’ बालकस्य तर्जनामयीं दृष्टिम् उपेक्ष्य परम-शिवः किञ्चित् अग्रेसृतः। तथा हि, अचिन्तनीयं किमपि घटितम् ! बालकः लौह-दण्डेन भगवन्तं शिवम् अताडयत्। ’अन्तः नैव प्रवेशार्थं मया पूर्वमेव प्रतिबोधितं नासीत् किम् ...’ भगवान् शिवः अतितरां क्रुद्धः सञ्जातः। किञ्चित् कालं विचिन्त्य ततः निर्गन्तुम् असौ निरणैषीत्। ततः प्रस्थानात् प्राक्, भगवान् शिवः बालकम् अब्रवीत् - ‘एतादृशः अहङ्करः! त्वादृशं लघु-बालम् अनुशास्तुं मम गणाः एव अलम्।’ त्वरितमेव भगवान् शिवः स्वीय-गणान् आकारयत् आदिशत् च, ‘गच्छन्तु, भवन-द्वारि प्रहरित्वपरम् अहङ्करिणं बालं सम्यक्तया शिक्षयन्तु।’

भगवतः शिवस्य सायुधाः गणाः स्वामिनः आज्ञां पूरयितुं द्रुतमेव भवन-प्रवेश-द्वारं प्रति धाविताः। पार्वत्याः सुतः अमुना बलप्रदर्शनेन न किञ्चिदपि भीतः गण-प्रमुखः तार-स्वरेण अवदत् – ‘कथं त्वं भगवन्तं शिवं समाह्वयितुं प्रभवषि वयं त्वां व्यापादयिष्यामः।’ विनैव कमपि उद्वेगम्, पार्वत्याः सुतः तान् अब्रवीत् – ‘मम मातुः भगवत्याः पार्वत्याः ईच्छानुसारम् अहम्, भवतां स्वामिनः आज्ञानुसारेण च भवन्तः आदिष्टाः स्मः। नाहं मनागपि परावर्तिष्ये।’

‘भगवत्याः पार्वत्याः सुते अस्मिन् आक्रमणमिदं किं समुचितम् ’ - इति शिव-गणाः द्वन्दाभिभूताः जाताः। बालके अस्मिन् विनैव किमपि आक्रमणं ते परावर्तिताः। तत्रान्तरे, भगवती पार्वती यत् किमपि घटितमासीत, तद् अभिज्ञातवती। ‘परम-शिवस्तु मम पतिः अस्ति, तथ्यम् अपरीक्ष्य एव, सः मम सुतम् आक्रान्तुं प्रायतत, अहं मदीय-पुत्रस्य गौरवं रक्षिष्यामि’– इति सा निर्णीतवती।

गणाः भगवन्तं शिवम् उपगम्य सर्वं यत् घटितं तत् वर्णितवन्तः। तत् श्रुत्वा शिवः आदिशत् यत् ‘यदि वयं परावर्तामहे, सः अस्मान् भीतान् अवगमिष्यति, गच्छन्तु तं पराजित्य प्रत्यागच्छन्तु।’ भगवतः शिवस्य सद्यः आदेशं श्रुत्वा, नूतन-बल-सम्पन्नाः गणाः भवनं प्रति द्रुतं प्रयाताः। नन्दिकेशः गणानां प्रमुखः आसीत। आत्मानं प्रति आगच्छतः गणान् दृष्ट्वा पार्वती-पुत्रः अवोचत् – ’अहं तु केवलं मदीय-जनन्याः आज्ञां परिपालितवान्। न मया भवन्तः किञ्चिदपि बाधिताः, तर्हि कथं माम् आक्रमन्ते ’ परञ्च गणाः न किञ्चिदपि सम्भाषितुम् उद्यताः आसन् युद्ध-समाघोषान् घोषयन्तः ते आक्रान्तुम् आरभन्त। एवं हि, भीषणं युद्धं प्रवृत्तम्। यद् अनुवर्तितं तद् आश्चर्यकरं नासीत् ! पार्वती-पुत्रस्य एकाकिनः युद्ध-वीरस्य समक्षं स्थातुम् अशक्ताः गणाः सपदि पराजयं स्वीकृतवन्तः। देवाधिदेवः शिवः स्वीयं भवनं प्रवेष्टुं नाऽहत् – इति वार्ता देवलोके अपि प्रसृता। समस्येयं केन प्रकारेण समाधेया ? पितामहः ब्रह्मा स्वर्गाधिपः इन्द्रः च, गहनं विचारणां अकुरुताम्। अन्ततः भगवन्तं शिवम् उपगन्तुं तौ निर्णीतवन्तौ। पितामहः ब्रह्मा स्वर्गाधिपः इन्द्रः च, परमशिवम् उपगम्य निज-समवेदनां प्रकाटितवन्तौ। शिवः तौ निगदितवान् यत् - ‘देवी-पार्वतीतः पराभवं न स्वीकरिष्यामि।’ ‘अहं स्वपक्षतः प्रयते।’ - इति उक्त्वा ब्रह्मदेवः कैलाश-पर्वतं प्रति जगाम। अनेकैः महात्मभिः सहकृतः पितामहः ब्रह्मा ब्राह्मण-रूपेण पार्वती-पुत्रं मेलितुं प्रयातः। ते प्रवीरं बालम् उक्तवन्तः - ‘प्रियवत्स ! त्वया परम-शिवस्य मार्गः नैव अवरोधनीयः आसीत्।’

बालकः अविचलितः एव स्थितः। ’सम्प्रति भवान् प्रस्थातुं शक्नोति, अहं केवलं निजमातुः आज्ञाम् अनुपालयामि।’ बालकेन ब्रह्मदेवस्यापि वचनम् अन्यथाकृतं इति वृत्तम् आकर्ण्य परमशिवः अतिक्रुद्धः जातः सः निज-सुतं कार्तिकेयं देवेन्द्रं च आकार्य न्यगदत् यत् – ‘कार्तिकेयः शिवगणान् सन्नयतु, देवेन्द्रः च देव-सेनाः सन्नेष्यति। तं व्यापादयन्तु।’ एवं हि, शिवगणाः देवसेनाः च, भवन-प्रवेशं प्रति प्रयाताः। एतद्-घटना-जातस्य वृत्तम् अवगम्य देवी पार्वती भगवतीं महाकालीं देवीं दुर्गां च आकार्य निरदिशत् यत् – ‘मम सुतः एकाकी वर्तते। अत्रभवत्यौ द्वेऽपि तस्मै साहाय्यं कुरुतात्।’ यथैव महाकाली आदेशमेनम् अशृणोत्, सा युद्धभूमिं प्रति सपदि प्रयाता। तया देवसेनाः लक्ष्यीकृताः। देवानाम् आयुधानि तया ग्रसितुं आरब्धम्। भीताः सन्तः देवाः पलायिताः। तत्रान्तरे, भगवती दुर्गा शिव-गणानां सेनानां साम्मुख्यं व्यदधात। तस्याः बलं सोढुम् अक्षमाः निःसहायाः गणाः स्व-जीवित-रक्षार्थम् इतस्ततः पलायिताः।

एतत्-सर्वं घटितम् अवगम्य भगवान् विष्णुः परमशिवं परामर्शितवान् – ‘महादेव ! न कश्चन सम्मुखात् बालमेनं पराजेतुं शक्नोति। वयं केवलं कपटेन एव तं पराजेतुं शक्ष्यामः।’

पार्वती-पुत्रम् आक्रान्तुं महाविष्णुः महादेवः च पृथक्-पृथक् दिशां प्रति प्रयातौ। एकतः, महाविष्णुः बालकस्य सम्मुखम् आक्रमणम् आरभत, अपरतः, महादेवः त्रिशूलेन पश्चभागात् बालकमेनम् आक्रमत। शिवस्य त्रिशूलेन बालकस्य शिरच्छेदः कृतः। युद्धं समाप्तम्। परञ्च परमशिवः दुःखी अभवत्। ’अहं देव्याः पार्वत्याः पुत्रं मारितवान्। मम पत्न्याः कृते किञ्चिदपि पीडादायि कार्यं मया नैव करणीयमासीत्।’

अपराध-बोधाविष्टः परमशिवः देवीं पार्वतीं मेलितुम् अगच्छत्। स्वीय-सुतस्य निधन-वार्तया सा अदम्यं क्रोधम् अनुभवति स्म। ’अत्रभवता मम पुत्रस्य जीवनं परावर्तनीयम् - इत्यहं वाञ्छामि। नैतावन्मात्रम् ! देवेषु सम्माननीयं गौरव-पदमपि अस्मै प्रदेयमित्यपि वाञ्छामि। ततः परमेव मम क्रोधः अपगमिष्यति’ - इति देवी पार्वती चीत्कृतवती। एतत् आकर्ण्य परमशिवः भवनात् बहिः निर्गत्य देवान् आदिशत् – ‘कृपया उत्तरदिशां प्रति गत्वा प्रथमं सम्मुखीक्रियमाणस्य प्राणिनः शिरश्छेदं कृत्वा च पार्वत्याः सुतस्य जीवनार्थं तत्-शिरःसन्धानं कुर्वन्तु देवाः सपदि एव निर्गताः। ते सर्वप्रथमं दीर्घ-दन्तिनं गजम् अपश्यन्। ते गजस्य शिरोवधं कृत्वा भवनं प्रत्यागताः। पार्वत्याः सुतस्य जीवनार्थं तस्य देहोपरि ते गजस्य शिरः स्थापितवन्तः। ते गजाननं बालं पार्वतीं उपानीतवन्तः। सा प्रसन्ना जाता। सा तं गजाननं स्वीय-अङ्के उपावेश्य भगवन्तं शिवम् अकथयत् यत् – ‘अस्मै देवेषु किं पदम् उपायनीक्रियते ’

परमशिवः गजाननस्य शिरसि निज-करपल्लवस्य स्पर्श-पुरस्सरं तस्मै आशीराशिं प्रदाय अवदत् – ‘अद्य प्रभृति बालोऽयं गणान् सन्नेष्यति अतः गणेशत्वेन अर्थात् गणानां स्वामित्वेन लोकेषु पूजयिष्यते।’ भगवती पार्वती अतितरां प्रसन्ना अभवत्। परमशिवः पुनरपि अवदत् यत् - ‘अस्मदीयोऽयं सुतः विघ्नानि अपाकर्तुम् उत्पादयितुं चापि शक्तिं सन्धारयति। अतः असौ विघ्नेश्वर-रूपेणापि ख्यापयिष्यते। विघ्नानि दूरीकर्तुं केवलं विघ्नेश्वस्य प्रसन्नता अपेक्ष्यते।’ एतत् श्रुत्वा देवाः सादरं गण-नायकं गणेशं नमस्कृतवन्तः। प्रसन्नः गजाननः गणेशः सर्वेभ्यः स्मितवदनः सञ्जातः।

# आश्रमेषु सन्यासाश्रमस्य प्राधान्यम्

**ब्रह्मचर्यं च गार्हस्थं वानप्रस्थं तथैव च**
**सन्यासश्चेतिभेदेन स्युः चत्वारस्ताश्रमाः॥**

आश्रम्यन्ते स्थियते यस्मिन् सः आश्रमः इति। आश्रमाः चत्वारः भवन्ति, ब्रह्मचर्याश्रमः, गृहस्थाश्रमः, वानप्रस्थाश्रमः, सन्यासाश्रमः इति। ब्रह्मचर्येण सदविद्याशिक्षा कर्तव्या। गृहस्थाश्रमादुत्तमाचरणं श्रेष्टानां च पदार्थानां ज्ञानं प्राप्नुयात। वानप्रस्थाश्रमेणैकान्तिक- सेवनमात्मोपासनं विद्याफलविचारादि च करणीयम्। सन्यासाश्रमे तु परब्रह्ममोक्षपरमानन्दप्रापणं कुर्यात। एतैः चतुर्भिः आश्रमैः धर्मार्थकाममोक्षकर्मणां सम्यक् सिद्धिः सम्पाद्यन्ते।

यथा च श्रुतिः- तमेतं वेदानुवचनेन ब्रह्मणाः विविदिषन्ति यज्ञेन दानेन तपसा। यज्ञो दानं तपश्चैव मनीषिणाम्। अत्याश्रमिभ्यः परमं पवित्रम्।

**ब्रह्मचर्याश्रमः:-** ब्रह्मणि वेदं चरितुं शीलं यस्य सः ब्रह्मचारि। एवं च ब्रह्मचर्याश्रमे ‘सं रात्रि स्त्रिसः उदरे बिभर्ति तं जातं द्रष्टमभिसंयन्ति देवाः।‘ ‘इयं समित्पृथ्वीद्योद्वितीयोतान्तरिक्षं समिधा पृणाति। ब्रह्मचारि समिधा मेखलया श्रमेण लोकस्पसा पिपर्ति।‘ ‘पूर्वी जातो ब्रह्मणो ब्रह्मचारि धर्मं वसनास्पसावतिष्टत्। तस्मात् जातं ब्राह्मणं ब्रह्मज्येष्टं देवाश्च सर्वे अमृतेन साकम्।‘

उपाध्यायः रात्रित्रयं उपनयमानो अनन्तरं विद्यार्थिनं ईश्वरोपासनारूपधर्मस्य पठनविचारणादि पाठनार्थं उपनयमानं आचार्यः अन्तः करोति। ब्रह्मचारिणं द्रष्टुं विद्वांसः आगच्छन्ति। तृतीये दिने उपाध्यायः होमं कृत्वा तं संकल्पबद्धं कारयति। सः विद्यार्थि तपसा वा धर्मानुष्टानेन पृथ्वादीन्, सर्वान् भूतान् सर्वान् प्राणिनश्च प्रसन्नान् करिष्यन्ति। बारह्मचारि धर्मानुष्टानेन अत्यन्तः पुरुषार्थी भूत्वा सर्वेषां जीवानां कल्याणं करोति। अतः सः विद्यया प्रकाशितः दीर्खकेशश्मश्रुभिः आच्छादितस्सन् दीक्षां गृहीत्वा तपसा विद्यां लेभे।

**गृहस्थाश्रमाः:-** ‘यदाग्रामे यदारण्ये यत्सभायां यदिन्द्रिये यदग्नेश्च कृपा वयमिदं तदवयजामहे स्वाह’ ब्रह्मचर्याश्रमानन्तरं गृहस्थाश्रमे कन्यया सह विवाहं कृत्वा दम्पतिना नियमेव धर्मेण च स्थित्वा ग्रामवासिनां यथासाध्यं समुन्नति कुर्यात। यस्मिन् आश्रमे गुहस्थ भूत्वा जीवयापनं क्रियते तम् आश्रमः गृहस्थाश्रमः उच्यते।

**वानप्रस्थाश्रमः:-** वने प्रकर्षेण नियमेन तिष्ठति चरतीति वानप्रस्थः, वानप्रस्थ एव वानप्रस्थः इति व्युत्पत्तिः। त्रयो धर्मस्कन्धा यज्ञोध्ययनं दानमिति। प्रथमस्पतः द्वितीयो ब्रह्मचर्याचार्य कुलवासः तृतीयोत्यन्तमात्मानमाचार्यकुले वसादनं सर्वे एते पुण्यलोकाः भवन्ति।

तत्र ऋग्वेदभाष्यभूमिकाभाष्ये अत्र सर्वेष्वाश्रमेषु धर्मस्य स्कन्धा अवयवशस्त्रयः सन्ति। अध्ययनम, यज्ञः, क्रियाकाण्डं, दानं च तत्र प्रथमो ब्रह्मचारि तपः सुशिक्षाधर्मानुष्टानेन आचार्य कुले वसति। द्वितीयो गृहस्थाश्रमी। तृतीयोत्यन्तमात्मानवसादयन् हृदये विचारयन् एकान्तदेशं प्राप्य सत्यासत्ये निश्चिनुयात। स वानप्रस्थाश्रमीति।

**सन्यासाश्रमः:-** ब्रह्मसंस्थो मृतत्वमेवेति इत्यस्य श्रुतेः आचार्य शङ्करभाष्ये विशदीक्रियते सर्वे एते त्रयोप्याश्रमिणो यथोक्तैः धर्मैः पुण्यलोका भवन्ति। पुण्यो लोक येषां त इमे पुण्यलोकाः आश्रमिणो भवन्ति। अवशिष्टस्त्वनुक्तः परिव्राड् ब्रह्मसंस्थो ब्रह्मणि सम्यक् स्थितः सोमृतत्वं पुण्यलोकविलक्षणमभरणभावमात्यन्तिकमेति नापेक्षिकं देवाद्यमृतत्ववत् पुण्यलोकात् पृथग्मृतत्वस्य विभागकरणादिति। अपि चान्यत्र-

तमेतं वेदानुवचनेन विविदिषन्ति ब्रह्मचर्येण तपसा श्रद्धया यज्ञेननाशकेन चैतमेव विदित्वा मुनिः भवत्येतमेव। प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति। शान्तोदन्ता उपरतः इत्यत्र उपरतः इति पदं कर्मपरित्यागरूप सन्यासपरम्। सहकार्याधिकरण वाक्ये तद्वतः विद्यावतः सन्यासिनः बाल्यपाण्डित्यमपेक्षया तृतीयमिदं मौनं विधीयते। सिद्धान्तलेशसंग्रहप्रतिपादितं भिक्षाचार्यचरन्तीति श्रुत्या च सम्यासः साधनचतुष्टयसम्पन्नस्य विशेषणमिति वदन्ति। तथा च यः वेदान्तश्रवणोधिकारि भवति सः सन्यासी इत्यर्थः।

**‘त्यक्ताशेषक्रियाश्यैव संसारं प्रणिहासतः**
**जिज्ञासोरेव चैकाम्यं त्रप्यन्तेष्वधिकारितः॥**

विवरणकारः श्रवणाद्यङ्गतया आत्मज्ञानफलता सन्यासे सिद्धा इति उक्तम्। अनन्यव्यापारेण श्रवणाद्यनुष्टानं सन्यासेनैव सिद्ध्यन्ति। गृहस्थाश्रमेषु श्रुतिविहिताग्निहोत्रादि कर्मकामवश्यानुश्टेयत्वात् परित्यागे प्रत्यवयव श्रवणात् च निरन्तरं वेदान्तश्रवणं दुष्करम्। आतः दुष्टद्वारेणैव सन्यासस्योपयोगः। आश्रमान्तरेषु आर्थात् ब्रह्मचर्ये गुरुशुश्रूषादीनां गुहस्थे कुटुम्बवरणादीनां,वानप्रस्थे च तु इति वेदान्तश्रवणं न सुलभं साधनम्। चतुर्थे सन्यासे कर्मान्तराणां अभावात्। तस्मात् ब्रह्मसंस्थामृतत्वमेवेति,अपि च सिद्धान्तलेशसंग्रहे तथापि वार्तिकेपि सन्यासस्य प्राधान्यं प्रतिपादयन्ति। गच्छतस्तिष्टता वाप जाग्रतः स्वपतोपि वा

न विचारपरं चेतो यस्यासौनृत उच्यते। आसुप्तेरामृतेः कालं नयेत वेदानतचिन्तया। आदि वाक्यैः सन्यासपयोग सिद्ध्यति। ब्रह्मणो व्युत्थाय, ब्रह्मण प्रव्रणेत इत्यादि सन्यासविधिवाक्येषु ब्राह्मण पदश्रवणात् तेषामेव सन्यास अधिकारः सिद्ध्यति। केचित् ब्रह्मणस्यैव सन्यासपूर्वक वेतान्दश्रवणं इतरयोस्तु तद्विना वेदान्तश्रवणेधिकार इति वदति। अपरे ब्रह्मणस्यैव सन्यासेधिकारः इतरयोः विद्वान्सन्यासेधिकारः इति च वदन्ति। दिने दिने तु वेदान्तश्रवणात् भक्तिसंयुतात् कृथ्थाशीतिफलं लभेत् इति सिद्धान्तलेशसंग्रहवचनात् मुख्याधिकारिभिः क्रियमाण वेदान्तश्रवणात् प्रतिबन्धकनिवृत्तिरूपं दृष्टफलं, तथा अदृष्टफलेन आमुष्मिकः फल साधनत्वम्। तथा च भगवत्गीतायां उक्तो यं श्लोकः-

**आसक्तबुद्धिः सर्वत्र जितात्मा विगतस्पृहः**
**नैष्कर्म्यसिद्धपरमां सन्यासेनाभिगच्छति॥**

एतैः चतुर्भिः आश्रमैः धर्मार्थमोक्षाणां सिद्धिः प्रतिपादयति। अनेन परमपुरुषार्थ अपि सिद्ध्यति।

# दर्शनमालानुसारं योगदर्शनम्

दर्शनं नाम किमिति प्रश्ने सति सामान्यतया वक्तुं शक्यते ’दृश्यते आधुनिकयुग अद्वैताचार्यैण श्रीनारायणगुरुणा वेदान्तशास्त्र प्रतिबोधितं तत्वं अद्वैतं लोककल्याणाय प्रतिपाद्यते। गुरुदेवः क्रिस्त्वब्धे 1864 आगस्त् 26 तमे दिने तिरूवनन्तपुरे चेम्पषन्ति इति ग्रामे वयल्वारगृहे भूजातः। तस्य पिता माटनाशान् माता कुट्टियम्मा च भवतः। न केवलं केरलेषु किन्तु लोके सर्वत्रापि तस्य नाम सुपरिचितमेव। अधःस्थितजनानां उन्नमनाय सः अतीव श्रद्धालुः आसीत्। तदर्थं गुरुणा कैरली-तमिल्-संस्कृत भाषासु षष्ठी परकृतयः विरचितम्। ते स्तोत्रकृतयः, अनुशासनकृतयः, गद्यकृतयः, परिभाषाकृतयः दार्शनिक कृतयः इति विभक्ताः। गुरोः दार्शनिककृतिषु अन्यतमा भवति दर्शनमाला।

मनः एव मनुष्याणां सर्वबन्धमोक्षयोः कारणं भवति। मनसः बन्धनात् यावत् समयं अस्माकं बोधः मुक्तः भवति तावत् समयं वयं मुक्ताः भवन्ति। एवं मनः संकल्पविकल्पेभ्यः मोचयितुं उपयुक्तां सिद्धिं साधारणजनेषु संवेदयितुं आरभते गुरुदेवः। तदर्थं गुरुदेवेन प्रोक्तानि दशदर्शनानि दर्शनमालायां अन्तर्भवन्ति। समस्तं वेदान्तशास्त्रं दशदर्शनरूपेण विभज्य अस्मिन् ग्रन्थं सक्रमं प्रतिपातयति। दर्शनशब्दस्य सामान्यार्थः वीक्षणं इति भवति। सर्वमपि वस्तु सम्पूर्णतया वा द्रष्टुं शक्यते। सम्पूर्णं दर्शनं एव सत्यदर्शनं भवति। संपूर्ण दर्शनं तु मिथ्यादर्शनं भवति। जीवितप्रतिभासगतं अपूर्णं दर्शनं पूर्णेन वस्तुदर्शनेन मेलयित्वा जिज्ञासवे पुरुषाय विशदयति गुरुः अस्मिन् ग्रन्थे। दर्शनमालायां गुरुः साधारण जनेभ्यः एव वक्तुं आरभ्यते। साधारणस्य मानवस्य लोकदर्शमं तथा एव गुरुः प्रथमं अङ्गीकरोति। सर्वेपि विश्वासिनः हिन्दुः वा क्रैस्तवः वा इस्लामिकः वा आदौ इदं लोकं न अस्ति पुनः स्पष्टा स्वसंकल्पेन इदं जगत् ससर्ज इति विश्वसन्ति। अयं विश्वासः एव गुरुदेवः प्रथमं विशकलनाय स्वीकरोति।

मानवमानसे संजाताः सर्वेपि मिथ्यबोधाः मिथ्या एव इति बोधः यदा जायते तदा तादृश अज्ञानजन्याः भयभीतयः अपकर्षताबोधः च तस्य मानसात् दूरीकर्तुं शक्यते। तस्मादेव बोधवत्करणस्य प्रथमसोपानत्वेन गुरुदेवः अध्यारोपदर्शनं उपदिशति। तदनन्दरं क्रमेण अपवाददर्शनं, असत्यदर्शनं, मायादर्शनं, भानदर्शनं, कर्मदर्शनं, ज्ञानदर्शनं, भक्तिदर्शनं, योगदर्शनं च उपदिश्यते। अन्ते निर्वाणदर्शनं उपदिशति। गुरुदेवः मोक्षमार्गं प्रापयितुं इच्छन् सर्वान् अपि मानुषान् तं लक्ष्यं साधयितुमेव अस्य ग्रन्थस्य रचनां निवर्तयामास। योगदर्शनम् दर्शनमालायां नवम दर्शनं भवति योगदर्शनम्। योगस्य निर्वचनं, स्वरूरं, साधनं, फलं च प्रकरणेस्मिन् गुरुणा स्पष्टुं निरूप्यते।

यत् मनः चिदात्मनि सततं योजयति युनक्ति च, मनोनिरोधरूपः सः अयं योगःइति शंसितः। योगः इति पदस्य निर्वचनं द्विधा भवति। योजयतीति योगः,युनक्ति इति योगः। चिदात्मनि अर्थात् ज्ञानस्वरूपे आत्मनि मनसः योजनं एव योग इति उच्यते। यत्र द्रष्टा, दर्शनं दृश्यं न विद्यते तत्र वासना योजयेत्। यः पश्यति सः द्रष्टा भवति। दर्शनक्रिययेव दर्शनं भवति। यद् दृश्यते तदेव दृश्यम्। द्रष्टा दर्शनं दृश्यं च इति त्रयं त्रिपुटीत्युच्यते। यत्र त्रिपुटी नास्ति स परमात्मा एव। तस्मिन् परमात्मनि मनसः योजनं कुर्यात। एतते वासनानाशपर्यन्तं करणीयं भवति।

अविद्यादशायां अनुभूयमानमिदं जगत् नामरूपात्मकं भवति। घटादीनि नामानि तेषां रूपाणि च वस्तुतः न सन्ति। तत्र सत्यं मृत्तिका एव तद्वत् नामरूपात्मकं जगदपि ब्रह्मणि आरोपितम्। अधिष्ठानभूतं ब्रह्मैव सत्यम्। एवं नामरूपमिदं सर्वं ब्रह्म एव इति मनः नित्यं ब्रह्मणि विलीयते इति यत् सः योगः भवति। तैलधारातुल्यतया चित्तस्य वृत्तिः नैरन्तर्येण आत्माभिमुखं प्रसरन्ति तत्रैव वाधं अवतिष्ठते। अयमेव योगः इति योगिभिः स्मृतः। वासनाबलेन विक्षिप्तं मनःयं यं विषयं उद्दिश्य निरसरेत् तस्मात् विषयात् बलात् निवर्त्य चिदात्मनि योजयेत्। अयं य़ोगः इह युज्यताम्। जनानां सर्वानर्धकारणं सङ्कल्प एव। सङ्कल्पेन कल्पितं इदं जगत् असत्यं भवति। संकल्पस्य कारणं वासना भवति। वासनासहितस्य संकल्पस्य कारणं समुच्छेदः समोमिरोधनेन करणीयः भवति। दृश्यं दृशः भिन्नं न भवति। दृश्यस्य अस्तित्वं नास्ति। दृशः अस्तित्वं भवति। अतः दृश्यं दृगात्मकं इति यः दृग्रूपे युञ्जीत, सः योगविदां वरः भवति।

प्रकृत्या चञ्चलं मनः भ्रमरत्वेन रूप्यते। इमां मनो भृङ्गं विषयेभ्य़ः निवर्त्य आत्मनि एव योजनीयः। आत्मानन्दरूपमधुनः माधुर्यं पिबतः तस्य स्पन्तनलेशोपि न संभवति। तदा योगः स्यात। एवं मनसः स्वास्थ्येन योगः संभवति। यदा भ्रुवोः अन्तः ध्यानं दृष्टिः च, लम्बिकोर्ध्वतः जिह्वाग्रं च स्यात् तदा निद्रालस्यादिनाशिनी खेचरीमुद्रा स्यात्। संक्षेपेण योगस्य द्वौ प्रकारौ स्तः ज्ञानयोगः कर्मयोगः च इति। श्रवणमनननिदिध्यासनाभ्यां संपद्यमानः आत्मसाक्षात्कारः एव ज्ञानयोगेन उच्यते। तादृशस्य ज्ञानयोगस्य अधिकारिता सिद्ध्यर्थं चित्तशुद्धिप्रदायकं निष्कामकर्मानुष्ठानं कमय्योगशब्देन निर्दिश्यते। अनयोः सर्वः य़ोगविस्तारः परिसमाप्यते।

# भट्टलोल्लटस्य रसोत्पत्तिवादः

भट्टलोल्लटः उत्पत्तिवादी आचार्यः इति उपगम्यते। अचार्योऽयं भामह-दण्डी- उद्भटादिषु आचार्यपम्परासु अन्तर्भवतिष्ठ उत्पत्तिवादः यद्यपि भट्टलोल्लटेन इदं प्रथमतया नोद्भावितः तथापि उत्पत्तिवादस्य समुचित-व्यवस्थापकत्वेन लोल्ट एव सर्वैरङ्गीक्रियते। लोके कारण कार्य सहकारिकारणपदैः व्यपदिश्यमानाः एव काव्ये अलौकितया प्रतीयमानाः विभावानुभावव्यभिचारिभाव पदव्यपदेश्याः भवन्ति। शकुन्तलादिभिः आलम्बन विभावैः, चन्द्रिकादिभिः उद्?दीपन विभावैः रोमाञ्चादिभिः अनुभावैः औत्सुक्यचिन्दादिभिश्च व्यभिचारिभावैः निष्पादितः परिपोषमुपगतः दुष्यन्तादिनिष्ठः रत्यादि स्थायीभावो रसः इत्युच्यते। रसविषये त्रयोदशाः विद्यन्ते- अनुकार्यं रामादिकथापात्रम्, अनुकर्ता नटः, दर्शक सामाजिकश्चेति। एषु कुत्र रसः इति प्रश्नः तावत् समाधेयः। लोल्लटस्तु मुख्यतया वृत्या रामादावनुकार्ये तद्रूपतानुसन्धानात् नटेऽपि प्रतीयमानः रसः इति अभिप्रैति। रसगङ्गाधरेऽपि इदमुक्तम् ’मुख्यतया दुष्यन्तादिगत एव रसो रस्यादि कमनीय विभावाद्यभिनय प्रदर्शनकोविदे दुष्यन्ताद्यनुकर्तरि नटे समारोप्य साक्षात् क्रियते इत्येके ’ इति। अस्य अयमभिप्रायः- वस्तुतः शकुन्तलादि विषयकरतिः दुष्यन्तादावेव वर्तते। नाटकादौ विभावादीनां समुचित कमनीयाभिनयेन दुष्यन्तादीनाम् अनुकर्तरिनटे सा रत्यादिरारोप्यते । सामाजिकस्तु नटे दुष्यन्तादि रूपता’मनुसन्धत्ते। तेन अनुकर्तृ- अनुकायर्योः भेदप्रतीतिः तिरोहितो भवति। इमाम् अभेदप्रतीतिम् आश्रित्यैव रसाभिव्यक्तिः तिष्टति। नटस्तु स्वयं रामाद्यनुकार्यभिन्नतया आत्मानम् अभिमन्येत।

**-प्रो. आरवासुदेवन् पोट्टि, तिरुवनन्तपुरम्**

## भट्ट लोल्लटस्य रसविषयकाः मुख्याः विचाराः

1. रसः अनुकार्ये रामादावेव उत्पद्यते। विभावानुभावसञ्चारिभावद्वारा उपचितः उद्बुद्धो वास्थायीभावः एव रसतां प्रतिपद्यते।

2. अयं च रसः रामादीनाम् अनुकर्तरि नटेऽपि तद्रूपानुसन्धानवशात् अवतिष्ठते।

3. सामाजिके तु रसस्तु नोत्पद्यते। परन्तु सोऽपि तद्रूपानुसन्धानवशात् अनुकार्यरामादिरूपं गृह्णाति। ततः स रसमास्वदते। आरोप्ये नटादावंशे ज्ञानलक्षणप्रत्यासक्त्या अलौकिकः शास्त्रीयानुभवमात्रकल्प्यः भवति।

# श्रीशंकर शिक्षायतन वैदिक शोध केन्द्रस्य राष्ट्रीया: संगोष्ठी अद्य

**प्रयागराजः। वार्ताहरः।** 30 जुलाई शुक्रवासरे सायंतने गूगलमीट माध्यमेन श्री शंकरशिक्षायतन वैदिक शोध केन्द्रस्य तत्वावधाने अहोरात्रवाद विमर्शः इति विषयमवलम्ब्य एका राष्ट्रीया संगोष्ठी भविष्यति। गोष्ठ्याः अस्याः अध्यक्षः जवाहरलाल नेहरू विश्वविद्यालयः नवदेहल्याः संस्कृत एवं प्राच्य विद्या अध्ययन संस्थानस्य संकाय प्रमुखः प्रो सन्तोष कुमार मुख्य वक्ता च निर्मल संस्कृत महाविद्यालयस्य प्राचार्यः डॉ चित्तनारायण पाठकः भविष्यतः।

संगोष्ठ्यां अन्ये च विशिष्ट वक्तारः डॉ कुलदीप कुमारः, सहायकाचार्यः संस्कृत विभागस्य हिमाचल प्रदेश केन्द्रीय विश्वविद्यालयस्य, डॉ विश्वेशः, सहायकाचार्यः संस्कृत विभागः, महात्मागांधी केन्द्रीय विश्वविद्यालयः मोतिहारी बिहारस्य डॉ प्रवीण कुमार द्विवेदी सहायकाचार्यः, संस्कृत विभागः प्रो-राजेन्द्र सिंह रज्जूभैया विश्वविद्यालयः प्रयागराजस्य, एवं च डॉ प्रतिभाआर्य, सहायकाचार्य संस्कृत विभागः जगत तारन महिला महाविद्यालयस्य प्रयागराजः प्रभृतयः प्रतिभागं कारिष्यन्ति। संगोष्ठ्याः सम्यग् संचालनं डॉ लक्ष्मीकान्त विमलः (वरिष्ठ शोध सहायकः श्री शंकर शिक्षायतनस्य) धन्यवाद ज्ञापनं च डॉमणिशंकर द्विवेदी (वरिष्ठ शोध सहायकः श्री शंकर शिक्षायतनस्य) यथाकाले करिष्यतः। केन्द्रस्य सचिवः निवेदयति मनीषिभिः प्रतिभागाय संगोष्ठ्यां।

## केन्द्रीय संस्कृत विश्वविद्यालयः गंगानाथ झा परिसरः प्रयागराजे दर्शन व्याख्यान माला



**प्रयागराजः। वार्ताहरः।** केन्द्रीय संस्कृत विश्वविद्यालयः गंगानाथ झा परिसरे प्रयागराजे प्राक्शोध पाठ्यक्रमः 2020-21 प्रक्रमे शोध व्याख्यान मालासमायोजिता। इयं व्याख्यान माला 29 जुलाई 2021 तः आगामिनि 6 अगस्त पर्यन्तम् रविवासरं विहाय प्रतिदिनं मध्याह्ने 12 वादनतः 1 वादन पर्यन्तम् चलिष्यति।व्याख्यानमालायांमुख्यवक्ताप्रोहरिदत्त शर्ममहाभागाः भविष्यन्ति। कार्यक्रमस्य प्रधान संयोजकः प्रो ललित कुमार त्रिपाठि महाभागाः।

## ।।गीतोपनिषद् ज्ञानामृतं।।





**गीताज्ञान संचरण समितिः, पटना, विहार, अध्यक्षः डॉक्टर सुदर्शन श्रीनिवास शाण्डिल्यः**

**।। तस्य प्रज्ञा प्रतिष्ठिता।।**

मानव जीवनस्य सर्वतः भद्राय गीताज्ञानं परमं सर्वोत्तमं परमं साधनं। ।गीतायाः महत् तत्वं यद् येषां बुद्धिः सुस्थिरा भवति ते एव सर्वकार्यसम्पादनाय सफलाः भवन्ति। ते एव ध्यानयोग्याः भवन्ति। परम् इन्द्रिय विषय सम्बन्धेन बुद्धिः चंचला भवति। ।मनसः चाञ्चल्यात् बुद्धिचाञ्चल्यं तीव्रतरं भवति। ।तत्र कारणं इन्द्रिय विषय सम्बन्ध कामना। ।यदा इन्द्रियाणि विषयान् चिन्तयन्ति तदाग्रे हानिश्रृंखलायाः वैज्ञानिकं विवेचनं गीतायां भगवता क्रियते। ।
गीतायाः द्वितीयाध्यायस्य 62/63 श्लोके द्रष्टव्यम्। ।

ध्यायतो विषयान् पुंसः सङ्गस्तेषूपजायते।।
सङ्गात् सञ्जायते कामः कामात् क्रोधऽभिजायते ।।62।।
क्रोधात् भवति सम्मोहः सम्मोहात् स्मृतिविभ्रमः ।।
स्मृतिभ्रंशात् बुद्धिनाशो बुद्धिनाशात् प्रणस्यति ।।63।।

ध्यानम्‚इन्द्रियाणाम् अनादिवासनानुचिन्तनम्। ।येन प्रभुपाद भिन्नपुंसः विषयनिवृत्तिचेष्टायां सत्यामपि अनादिसूक्ष्मवासनाकारणात् मनः बारम्बारं विषयान् चिन्तयति। तेन तेषु शब्दादिविषयेषु विषयासक्तपुरुषस्य सङ्गः रागः आसक्तिः प्रवृद्धा भवति। । सङ्गात्‚विषयानुरागात् कामः आसक्तेः परिपक्वावस्था, अस्यामवस्थायां विषयासक्तः मनुष्यः केनापि प्रकारेणापि धर्माधर्मविचारं विहाय विषयान् उपभोक्तुं सन्नद्धो भवत्येव प्रवृत्तो भवति। विषयासक्तिकारणात् विषयपूर्त्यभावे कामात् क्रोधः सञ्जायते। । क्रोधो नाम दुर्बुद्धिशक्तिदुष्प्रभावः।। तस्य दुष्प्रभावात् सम्मोहः‚ कृत्याकृत्यविवेकशून्यता। क्रोधप्रभावेन किं करणीयं किमकरणीयमिति विचाराभावात् विषयासक्तः मनुष्यः कमपि दुराचारं कर्तुं प्रवृत्तो भवति, प्रवृत्तिरपि नहि अपितु कुकर्मलीनो भवति। तस्य समक्षे स्वजनपरिजनपरजनभेदो न भवति। केवलं विषयकामनापूर्तिः । सम्मोहात् इन्द्रियविजयमाप्तुं स्मृतिः नश्यति। स्मृतिनाशात् आत्मज्ञानदृढताजनिका बुद्धिः नश्यति। आत्मज्ञानबुद्धिनाशात् जीवः नश्यति। ।अर्थात् सांसारिकविषयमग्नो भूत्वा जन्म मृत्यु चक्रे आपतति। अयमेव जीवात्मनः महाविनाशः।

अस्मात् विनाशात् रक्षणाय प्रभुप्राप्तिरेव अनुत्तमः **सर्व श्रेष्ठः उपायः।।**

**।।।।विमलः हिन्दीभावानुवादः।।।।।**

संसार में सुस्थिर बुद्धि से युक्त मनुष्य ही शुभ कार्य सम्पादन में सक्षम सफल प्रातिष्ठित होता है। ।परन्तु विषय सम्बन्ध जन्य कामना से बुद्धि भगवान् से सम्बद्ध न होकर विषयासक्त हो जाती है। । जिससे मन चञ्जल अस्थिर होता है। ।यही मन मानव के चतुर्दिक विनाश का कारण होता है। । इसका क्रमिक वैज्ञानिक विवेचन भगवान् कृष्ण ने गीता में किया है। भगवान् से पृथक् जिसका मन है उस व्यक्ति का मन विषयों का ही चिन्तन करता है। ।विषयों से अलग रहने का इच्छुक होने पर भी अनादि विषयभोग वासना के कारण इन्द्रिय विषय चिन्तन में ही लीन हो जाती है ।फलतः विषय में राग की वृद्धि होती है।। उस राग या विषय भोग की प्राप्ति न होने पर क्रोध होता है। जिससे व्यक्ति विवेकशून्य हो जाता है। ।करणीय अकरणीय का भेद भूल जाता है। इस क्रोध की चरमास्था में आत्मज्ञान भी प्रच्छन्न हो जाता है। फलतः व्यक्ति क्रोध पर शमन शक्ति की विस्मृति से आबद्ध हो जाता है। ।इस विस्मृति से आत्मज्ञाननिश्चयात्मक बुद्धि नष्ट हो जाती है।।इस बुद्धि के नष्ट होने से व्यक्ति विषय हो जन्म मरण चक्र जाल में आबद्ध हो जाता है। यही प्रत्येक मनुष्य का महाविनाश है ।।
इस महाविनाश से त्राणार्थ भगवद्भक्ति ही एक मात्र साधन है।

**।जय श्रीकृष्ण।।**

## शैवीदीक्षा

निष्ठा ममापि सरला तव कार्य्यवर्ये
या सा भविष्यति कदा सुफला सुपूर्णा ।
दुर्वारराजनगरे खलु वन्दिशाले
त्वां चिन्तयामि कलिकालकपालमालम् 1
ब्रह्मार्पणं शिवशिवात्मकसार्वभौमं
निर्वेदतत्वममलं परमेश्वराख्यम् ।
अव्याकृतं परमसुन्दरलिंगरूपं
निर्द्वन्द्वमुक्तिसदनं निरतं व्रजामि 2
कृत्स्नं नितान्तविजयारसरासयन्तं
प्रश्नं करोमि शतरुद्रविशारदं तम् ।
हे शाश्वत प्रभुवर प्रणतार्तिनाश
शम्भो प्रसीद भगवन् शिवरात्रिलग्ने 3
सेवा कृता तव सदा विरता न शम्भो
सन्ध्या प्रभातसमये दिवसे च रात्रौ ।
त्वन्नामधामशिवशान्तनितान्तकान्ते
दान्ते भवेन्मम मनो प्रयतं प्रयाचे 4
ॐ ॐ जपन्तमनिशं शतरुद्रकर्म
रुद्राभिषेकगहनं विहितं प्रशान्तम् ।
सत्यं त्वमेव चरमं परमं च तत्त्वं
जाने समस्तजगतां पतिमान्यगण्यः 5

**नन्दप्रदीप्तकुमारः**



मार्ग अवरुद्धः
सौरभ कुमार





**प्रयागराजः!** भारतसर्वकारस्य सूचनाप्रसारणमन्त्रालय 'क्षेत्रियलोकसम्पर्कब्युरो' इति विभागद्वारा आयोजिते कार्यक्रमे 'मान्धाता' इति क्षेत्रस्यान्तर्गते 'छितपालगढ़' इति स्थाने त्रिदिवसीयः 'कोविड-नवदश' इति विषाक्तनिवारणाय टीकाकरणस्य कृते जागरुकता अभियानः सम्पन्नो जातः।

## अमृतवाणी गीतातत्वार्थबोधः।।



**शत्रुघ्नश्रीनिवासाचार्यः पण्डित शम्भुनाथ शास्त्री वेदान्ती भागलपुर, ( बिहार )**

**विषया विनिवर्तन्तेनिराहारस्य देहिनः।**
**रसवर्जं रसोत्र्प्यस्परं दृष्ट्वा निवर्तते ?**
**भगवद्गीता /2/59**
**संस्कृतभाष्यम्-** वैराग्याद्रसनिवृत्तिः
**स्थितप्रज्ञस्य देहिनः।**
**निराहारस्य जीवस्य**
**रसासक्तिर्न नश्यति?**

यस्य पुरुषस्य स्वभावत एव विषयेषु रागः न स्यात् असावेव वैरागी कथ्यते। तस्य वैरागिणः साधनावस्थायामेव रसनिवृत्तिः भवति। परञ्च विषयवैराग्यं विनैव ये निराहारिणःपुरुषाः विचारपूर्वकं साधनासिद्धौ संलग्नाः सन्ति तेषां विषयत्यागे कृतेत्रपि रसबुद्धेः निवृत्तिर्न भवति। स स्थितप्रज्ञः परमात्मनःआनन्दमनुभूय क्षिप्रमेव रसनिवृत्तः भवति।तस्मिन् रसबुद्धेरभावः दृश्यते।एतादृशःपुरुष एव परमहंस इवाचरति।

अत्र रसोप्यस्य पदेनेदं रहस्यात्मकं तथ्यम् समुत्पद्यते यत्-- साधकस्य अहंभावे एव रसबुद्धिः तिष्ठति,रसो राग‚आसक्तिः कथ्यते। रसः विषयासक्तसाधके स्थूलरूपेण रागस्य रूपधारणं कृत्वा निवसति। एतदर्थं साधकैः अहंभावोत्पादकः रसः यत्नेन हापनीयः।

**अन्वय शब्दार्थः -** श्लोकसंकेतः- विषयाविनिवर्तन्ते-परं दृष्ट्वा निवर्तते।। गीता 2/59 निराहारस्य रूप,रस,गन्ध, स्पर्श, और शब्द इन विषयों से जिनकी चक्षु आदि इन्द्रियाँ संयत ( विमुख) हो गयी हैं ऐसे ,देहिन‚जीवात्मा के ,रसवर्जम्‚विषयभोग की आसक्ति को छोड़कर, विषयाः‚इन्द्रियों के विषय रूपादि,विनिवर्तन्ते ‚निवृत्त हो जाते हैं, किन्तु विषय भोग की वसना निवृत्त नहीं होती है, अस्य‚विषयविमुख जीवात्मा का, रसोत्रपि‚विषयभोग की लालसा‚ आसक्ति भी परम‚ (रूपादि विषयों के भोग से प्राप्त होने वाले सुख की अपेक्षा उत्कृष्ट) आत्मस्वरूप का, दृष्ट्वा दर्शन कर,निवर्तते निवृत्त हो जाती है।

**तत्त्वार्थः-** रूप,रस,गन्ध, स्पर्श,और शब्द इन्द्रियजन्य पाँच विषयों से जिनकी चक्षु आदि इन्द्रियों संयत‚विमुख हो गयी हैं, ऐसे जीवात्मा के रूपरसादि विषय-भोग की वसना को छोड़कर शेष रूपादि विषय निवृत्त हो जाते हैं, किन्तु विषय-भोग की वासना निवृत्त नहीं होती है। विषय- विमुख जीवात्मा को विषय-भोग की वासना की तभी निवृत्त होती है जब आत्मस्वरूप का साक्षात्कार होता है।

**रहस्यात्मक- तथ्य -** ईश्वर ने जीव को दश इन्द्रियों का स्वामी बना कर पृथ्वी पर भेजा है । जिनमें पाँच ज्ञानेन्द्रियाँ और पाँच कर्मेन्द्रियाँ कहलाती हैं । जिन इन्द्रियों से विषय का ज्ञान होता है, वह ज्ञानेन्द्रियाँ कहलाती हैं और जिन इन्द्रियों से कर्म किया जाता है वह कर्मेन्द्रियाँ कहलाती हैं। हमारी ज्ञानेन्द्रियाँ मन के सहयोग से अपने- अपने विषयों का उपभोग करती हैं।

भगवान् आदि जगद्गुरु स्वामी रामानुजाचार्य जी ने विषय शब्द की व्युत्पत्ति इस प्रकार से की है- 'इन्द्रियाणामाहारः विषयः' अर्थात् इन्द्रियों का आहर ही विषय कहलाता है।

जिस प्रकार एकादशी आदि व्रत के उपवास में अन्न से इन्द्रियों को हटा लेने पर भी अन्न के प्रति जो आसक्ति है वह अन्दर में बनी ही रह जाती है तथा उपवास से उपरत होते ही अन्न रूप आहार को प्राप्त करने की लालसा जागृत हो उठती है, वह तबतक शान्त नहीं होती जब तक अन्न का ग्रास ग्रहण नहीं हो जाता। ठीक इसी प्रकार इन्द्रियों को विषय से हटा लेने पर भी विषयासक्ति बनी रहती है।

आत्मस्वरूप के दर्शन के पश्चात विषयासक्ति से निवृत्ति हो जाती है। आत्मदर्शन से जो अलौकिक सुख का आनंद मिलता है वह विषयासक्ति में नहीं मिलता।

## ।। शिव महिम्न स्तोत्रम्।।



**- डॉ तेज प्रकाश पूर्णानन्द व्यास**

**क्रतौ सुप्ते जाग्रत् त्वमसि फलयोगे क्रतुमतां**
**क्व कर्म प्रध्वस्तं फलति पुरुषाराधनमृते**
**अतस्त्वां सम्प्रेक्ष्य क्रतुषु फलदान-प्रतिभुवं**
**श्रुतौ श्रद्धां बध्वा दृढपरिकरः कर्मसु जनः**

हे देवाधिदेव ! आपने ही कर्म-फल का विधान बनाया। आपके ही विधान से अच्छे कमी तथा यज्ञ कर्म का फल प्राप्त होता है। आपके वचनों में श्रद्धा रख कर सभी वेद कमी में आस्था बनाए रखते हैं तथा यज्ञ कर्म में संलग्न रहते हैं।

**क्रियादक्षो दक्षः क्रतुपतिरधीशस्तनुभृतां**
**ऋषीणामार्त्विज्यं शरणद सदस्याः सुर-गणाः**
**क्रतुभ्रंशस्त्वत्तः क्रतुफल-विधान-व्यसनिनः**
**ध्रुवं कर्तुं श्रद्धा विधुरमभिचाराय हि मखाः**

हे प्रभु ! यद्यपि आपने यज्ञ कर्म और फल का विधान बनाया है तदपि जो यज्ञ शुद्ध विचारों और कमी से प्रेरित न हो और आपकी अवहेलना करने वाला हो उसका परिणाम कदाचित विपरीत और अहितकर ही होता है। दक्षप्रजापति के महायज्ञ से उपयुक्त उदाहरण भला और क्या हो सकता है दक्षप्रजापति के यज्ञ में स्वयं ब्रह्मा पुरा-ेहित तथा अनेकानेक देवगण तथा ऋषि-मुनि सम्मिलित हुए। फिर भी शिव की अवहेलना के कारण यज्ञ का नाश हुआ। आप अनीति को सहन नहीं करते भले ही शुभकर्म के संदर्भ में क्यों न हो।

**प्रजानाथं नाथ प्रसभमभिकं स्वां दुहितरं**
**गतं रोहिद् भूतां रिरमयिषुमृष्यस्य वपुषा**
**धनुष्पाणेर्यातं दिवमपि सपत्राकृतममुं**
**त्रसन्तं तेऽद्यापि त्यजति न मृगव्याधरभसः**

एक समय में ब्रह्मा अपनी पुत्री पर ही मोहित हो गए जब उनकी पुत्री ने हिरनी का स् वर ू प धारण कर भागने की कोशिश की तो कामातुर ब्रह्मा भी हिरन भेष में उसका पीछा करने लगे। हे शंकर तब आपने व्याघ्र स्वरूप में धनुष-बाण लेकर ब्रह्मा की और कूच किया। आपके रौद्र रूप से भयभीत ब्रह्मा आकाश दिशा की ओर भाग निकले तथा आजे भी आपसे भयभीत हैं।

**स्वलावण्याशंसा धृतधनुषमह्नाय तृणवत्**
**पुरः प्लुष्टं दृष्ट्वा पुरमथन पुष्पायुधमपि**
**यदि स्त्रैणं देवी यमनिरत-देहार्ध-घटनात्**
**अवैति त्वामद्धा बत वरद मुग्धा युवतयः**

हे योगेश्वर! जब आपने माता पार्वती को अपनी सहधर्मिणी बनाया तो उन्हें आपके योगी होने पर शंका उत्पन्न हुई। यह शंका निर्मूल ही थी क्योंकि जब स्वयं कामदेव ने आप पर अपना प्रभाव दिखलाने की कोशिश की तो आपने काम को जला करा नष्ट करा दिया।

**श्मशानेष्वाक्रीडा स्मरहर पिशाचाः सहचराः**
**चिता-भस्मालेपः स्त्रगपि नृकरोटी-परिकरः**
**अमङ्गल्यं शीलं तव भवतु नामैवमखिलं**
**तथापि स्मर्तणां वरद परमं मङ्गलमसि**

हे भोलेनाथ! आप श्मशान में रमण करते हैं, भुत-प्रेत आपके संगी होते हैं, आप चिता भस्म का लेप करते हैं तथा मुंडमाल धारण करते हैं। यह सारे गुण ही अशुभ एवं भयावह जान पड़ते हैं। तब भी हे श्मशान निवासी आपके भक्तो को आप इस स्वरूप में भी शुभकारी एव आनंददायी ही प्रतीत होते हैं क्योंकि हे शंकर आप मनोवांछित फल प्रदान करने में तनिक भी विलम्ब नहीं करते।

**मनः प्रत्यक् चित्ते सविधमविधायात्त-मरुतः**
**प्रहृष्यद्रोमाणः प्रमद-सलिलोत्सङ्गति-दृशः**
**यदालोक्याह्लादं ह्रद इव निमज्यामृतमये**
**दधत्यन्तस्तत्त्वं किमपि यमिनस्तत् किल भवान्**

हे योगिराज! मनुष्य नाना प्रकार के योग्य पद्धति को अपनाते हैं जैसे की सांस पर नियंत्रण, उपवास, ध्यान इत्यादि। इन योग क्रियाओं द्वारा वो जिस आनंद, जिस सुख को प्राप्त करते हैं वह वास्तव में आप ही हैं। हे महादेव!

**त्वमर्कस्त्वं सोमस्त्वमसि पवनस्त्वं हुतवहः**
**त्वमापस्त्वं व्योम त्वमु धरणिरात्मा त्वमिति च**
**परिच्छिन्नामेवं त्वयि परिणता बिभ्रति गिरं**
**न विद्मस्तत्तत्त्वं वयमिह तु यत् त्वं न भवसि**

हे शिव ! आप ही सूर्य, चन्द्र, धरती, आकाश, अग्नि, जल एवं वायु हैं। आप ही आत्मा भी हैं। हे देव मुझे ऐसा कुछ भी ज्ञात नहीं जो आप न हों।

**त्रयीं तिस्त्रो वृत्तीस्त्रिभुवनमथो त्रीनपि सुरान्**
**अकाराद्यैर्वर्णैस्त्रिभिरभिदधत् तीर्णविकृति**
**तुरीयं ते धाम ध्वनिभिरवरुन्धानमणुभिः**
**समस्त-व्यस्तं त्वां शरणद गृणात्योमिति पदम्**

हे सर्वेश्वर! ॐ तीन तत्वों से बना है अ, ऊ, मं जो तीन वेदों (ऋग, साम, यजु), तीन अवस्था (जाग्रत, स्वप्न, सुशुप्त), तीन लोकों, तीन कालों, तीन गुणों तथा त्रिदेवों को इंगित करता है। हे ॐकार आपही इस त्रिगुण, त्रिकाल, त्रिदेव, त्रिअवस्था, और त्रिवेद के समागम हैं।

**भवः शर्वो रुद्रः पशुपतिरथोग्रः सहमहान्**
**तथा भीमेशानाविति यदभिधानाष्टकमिदम्**
**अमुष्मिन् प्रत्येकं प्रविचरति देव श्रुतिरपि**
**प्रियायास्मैधाम्ने प्रणिहित-नमस्योऽस्मि भवते**

हे शिव, वेद एवं देवगन आपकी इन आठ नामों से वंदना करते हैं - भव, सर्व, रूद्र, पशुपति, उग्र, महादेव, भीम, एवं इशान। हे शम्भू मैं भी आपकी इन नामों से स्तुति करता हूं।

**नमो नेदिष्ठाय प्रियदव दविष्ठाय च नमः**
**नमः क्षोदिष्ठाय स्मरहर महिष्ठाय च नमः**
**नमो वर्षिष्ठाय त्रिनयन यविष्ठाय च नमः**
**नमः सर्वस्मै ते तदिदमतिसर्वाय च नमः**

हे त्रिलोचन, आप अत्यधिक दूर हैं और अत्यंत पास भी, आप महाविशाल भी हैं तथा परमसूक्ष्म भी, आप श्रेठ भी हैं तथा कनिष्ठ भी। आप ही सभी कुछ हैं साथ ही आप सभी कुछ से परे भी हैं।

**-क्रमशः**

# स्नेहमयी जीवनाशा

**रम्या पुलियन्नूर्**

'एस् एस् जि एच् एस् एस् कण्टंङ्काली पय्यन्नूर, कण्णूर । मम प्राप्तिसमये कवाटः पिहितः आसीत् । तत् गृहं वातावरणं च अत्यन्तं पुरातनमिव अभासत। जीवनम् अत्रास्तीत्यस्य कापि कला तत्र दृष्टिगोचरा नासीत्। अङ्कणं न परिमार्जितम्, तत्र तृणानि रूढमूलानि काननच्छायां प्रयच्छन्ति स्म। गृहं च न परिमार्जितम्। धूलिधूसरितम् आसीत। लूताजालैः निर्मिताः भिन्नभिन्नालङ्कृतयः तत्र तत्रासन्। दूरदेशोद्योगप्राप्तौ अनन्यगामिकाहम् एकमात्र बन्धुगृहम् एतत् प्रविष्टा। गृहस्य अन्तः प्रकाशः नास्ति प्रायः । चतुश्शालेत्यतः लभ्यमान प्रकाशेन मार्गाः ज्ञाताः। महानसस्य पुरतः विद्यमाने प्रकोष्ठे बन्धुर्मम सा दीपज्वालनाय वर्तिकाः सज्जीकरोति स्म। तस्याः दर्शने ममहृदयं छिन्न भिन्नम् अभवत् । पूर्वं ऐश्वर्यदेवतेव विराजमाना सा सुमङ्गलित्वं सम्यक् अलङ्करोति स्म । अधुना तु कलुषितवस्त्रा कृशगात्री सा केशान् न प्रसाधितवतीति दृष्टा मया। तस्याः एकमात्रपुत्र्याः भर्तुश्च अपघातेन देहवियोगः मया ज्ञातः आसीत्। तथापि एवंविधम् एतस्य परिवर्तनं न ज्ञातमेव मया। स्नेहव्यवहारेणैव सा रक्षितुंशक्या इति ज्ञात्वा अहं तत्र दीपं ज्वलितवती। दीपस्य प्रकाशेन अस्वस्थतां प्रदर्शितवती सा पूर्वकर्मस्मरणेन वा वार्तिकायाः सज्जतायां लग्ना आसीत। समीपं गत्वा 'पेरश्शी ' इति आहूय स्मारितवती। ममाह्वानेन सा किञ्चित् स्मृतवतीव भावं प्रकटितवती। किञ्चितपि समीपस्था भूत्वा तस्याः स्कन्धे हस्तं विधाय अहं निर्मला इति सूचितवती। उद्योगप्रप्तिवृत्तान्तं सर्वं तां सूचितवती। इतः परम् अत्रैव मम वासः इति च । सा अङ्गीकृतवती । तस्मिन् दिने परस्परसम्भाषणं विना मौनभोजनम् आसीत। अग्रिमदिने प्रातरुत्थाय गृहस्वच्छतायां व्यपृताहम् । गृहम् अङ्कणं च सम्यक् परिमार्ज्य स्नानं ततः श्रीगृहे दीपज्वलनं च श्रद्धया मया आचरितम् । मम भागवतपारयणं श्रुत्वा सा उत्थितवती । ततः किञ्चिदाश्वस्ता इव स्नात्वा आगत्य मम समीपम् उपविष्टा । ततः महानसे द्वापि मिलित्वा आहारनिर्माणं कृतवत्यौ । मम प्रस्थानावसरे सा भोजनपात्रम् आनीतवती। ' नावश्यकं , मध्यह्ने अहम् आगत्य मिलित्वा भोजनं कुर्वः ' इति कथनेन सा सन्तुष्टा अभवत्। जीवनाशा तस्यां स्फुरितेव। मम गमनसमये पुरतः आगत्य स्थितवती। स्वपुत्रीं स्मृत्वा अश्रूणि मुञ्चन्ति दृष्टा मया।

तद्दिने सायंकाले तामपि बहिर्गन्तुं प्रेरितवती। महता कष्टेन तां बहिरानाय्य वाटिकानिर्माणम् आरब्धवती। सापि मम साहाय्यार्थं सन्नद्धा अभवत्। एकघण्टाभ्यन्तरे सुन्दरम् उद्यानं सज्जीकृतवत्यौ। अनन्तरं स्नात्वा सन्ध्यावन्दनाय उपविष्टे। एवम् एकमासानन्तरं निरन्तरसामीप्यदानेन तस्यां जीवनोत्साहः वर्धितः। समीपस्थाः बालाः तस्याः वाटिकायामगत्य क्रीडां कर्तुमारब्धवन्तः । तेषां निरन्तरकोलाहलैः तत् गृहं मनुष्यगृहं जातम्। सा मध्यपि पुत्रीनिर्विशेषं स्निह्यति स्म। अहमपि स्नेहं दत्वा ताम् पुनः जीवनोन्मुखं कृतवती। आत्मविश्वासेन आश्वस्ता च।

# कृष्णस्य बाललीलाः

**( सरलया संस्कृत-गिरा वर्णिताः )**
**डॉ. बलदेवानन्द-सागरः**

भारते यदुवंशः प्रमुखेषु राजवंशेषु अन्यतमः आसीत। अस्य वंशस्य अनुवर्तिनो यादवाः गोपालकत्वेन विख्याताः जाताः। ते सुख्याते सुरम्ये प्रदेशे गोकुले निवसन्ति स्म। यादवानां प्रमुखः नन्द-गोपः तस्य पत्नी यशोदा च, आनन्द-सन्दोहं कृष्णं दत्तक-पुत्रत्वेन स्वीकृत्य तं गोकुलम् आनीतवन्तौ। गोकुलस्य अनेन नूतनेन संयोगेन यादवानां प्रसन्नता द्विगुणिता जाता। कृष्णः गोकुल-वासिनां जीवनेषु अतुल्यं परिवर्तनम् अकरोत्। प्रेम्णा स्नेहेन च गोपाल-इति नाम्ना ख्यातः कृष्णः अतितरां चञ्चलः सर्वैः साकं लीलया व्यवहरति स्म। यद्यपि तस्य चञ्चल-बाल-लीलाभिः नैकवारं प्रतोदिताः सन्तोऽपि ते सर्वे गोपालाय स्निह्यन्ति स्म। अनुमिनोतु , गोपालाय अधिकतमं किं रोचते स्म ? भवतु, दुग्धं नवनीतं च। प्रायेण प्रतिदिनमेव, यदा वत्सः निज-मातुः दुग्धं पातुम् उपक्रमते स्म , तद्-दृश्यं रमणीयं भवति स्म। दुग्ध-पानानन्तरं कृष्णः गोवृन्दस्य पश्च-भागे निलीयते स्म। यदा यादव-स्त्रियः गो-दुग्धाहरणार्थम् आयान्ति स्म, कृष्णः गोः पुच्छं सहसा आकर्षयति स्म। भवता किं कदाचित् एवं श्रुतं यत् कश्चन गोः पुच्छम् आकर्षयति चेत् तदा किं गौः स्थिरा अभविष्यत् नैव... एषा स्यात् कूर्देत् ... दुग्ध-पात्रं च, आस्फा लयेत्...! एतत् सर्वं दृष्ट्वा कृष्णः प्रमुदितः सन् मुक्त-मनसा हसति दूरे च पलायते स्म। एकदा कृष्णः अतितरां चाञ्चल्य-पूर्णां लीलाम् अकरोत्। सः निजगृहस्य दुग्ध-भण्डारण-कक्षं गतवान्, यत्र दुग्धं मृत्तिका-पात्रे बालैः अप्राप्ये उन्नते स्थाने आधीयतेस्मर किं जानाति भवान् कृष्णेन किम् आचरितम् सः पार्श्व-स्थात् कक्षात् चूर्णिका- प्रस्तरमेकम् लोठयित्वा तत्रानीय तस्योपरि च स्थितवान्। अहो काठिन्यम्...! साम्प्रतमपि सः दुग्ध-पात्रं स्प्रष्टुं नैव अपारयत्। सः कानिचित् काष्ठानि प्रकीर्ण-फलकानि च समेत्य मिथः संयोज्य प्रस्तर-खण्डोपरि स्थापितवान्। तदुपरि महता प्रयासेन पादाङ्गुलिभिः आधृतः सन् दुग्ध-पात्रं बलात् स्प्रष्टुम् अपारयत्। सहसा काष्ठानि प्रकीर्ण-फलकानि च अवपतितुम् आरभन्त। कृष्णः पात्र-रज्जुं धृत्वा ' अम्ब ! अम्ब !! कृपया आगच्छतु ... !!! साहाय्यं करोतु... अम्ब...!' इति सोत्कण्ठं मातरम् आकारयत्।

तस्मिन् स्थले सर्व-प्रथमं कृष्णस्य भ्राता, बलरामः प्राप्तः, नभसि दोलायमानं कृष्णंदृष्ट्वा बलरामः सानन्दं मातरम् आकारयत् , 'मात ! सपदि आगच्छ ! कृष्णः नभसि दोलायते .... हा... हा... हा...!' एतत्-संक्षोभं श्रुत्वा यशोदा, राधया तत्-सखीभिः च साकं धावन्ती तत्र आगता। राधा कृष्णस्य सखी आसीत्। कृष्णं दृष्ट्वा यशोदा साश्चर्यं अवदत् – 'उद्धत ! बाल ! , अहं दुःखितास्मि त्वत्तः... !' कृष्णः यदा अधः अपश्यत् , सः राधां तस्याः अन्यसखीः च अपश्यत्, तदा सः समधिकेन तार-स्वरेण अवदत् – 'अम्ब ! कृपया ... अम्ब !! कृपया ... साहाय्यं करोतु...अम्ब...! मां नीचैः अवतारयतु ...!!' इदं श्रुत्वा कृष्णे कृतदया यशोदा तम् अवातारयत्। परञ्च, कृष्णः साम्प्रतमपि हताशः आसीत् , अतः यशोदा किम् अकरोत् अस्तु ... किञ्चित् नवनीत-पिण्डं दत्वा तं प्रसादितवती। एकदा , कृष्णस्य अन्यतमः सखा बलरामम् उपगम्य अवदत् , 'राम ! पश्यतु , कृष्णः मृत्तिकां खादति !' अयं कृष्णस्य ताडनं वाञ्छति स्म। निश्चयेन, मृत्तिकां खादन्तं कृष्णं यदि यशोदा पश्यति चेत् नूनं सा तं ताडयेत् ! इदमेव असौ सखा ईच्छति स्म। बलरामः विनैव काल-यापनम् , धावन् एव यशोदाम् उपगम्य तां वार्ताम् इमाम् अश्रावयत्। रुष्टा यशोदा बलरामेण साकं कृष्णम् अन्वेष्टुं निर्गता । तैः दूरं नैव गमनीयम् आसीत्। सः तत्रैव आसीत् ! तम् उपगम्य यशोदा अपृच्छत् , कृष्ण ! कथय मां, किं त्वया मृत् भक्षिता ' नैव मात...! नैव भक्षिता।' कृष्णः अवदत्। यद्यपि यशोदा तं पुनः पुनः पृष्टवती, कृष्णः तुल्यमेव उत्तरं प्रादात। परञ्च, यशोदा तस्मिन् विश्वासं नैव कृतवती ! कृष्णस्य हस्तौ दृढं तस्य पृष्ठभागे बद्ध्वा अपृच्छत् , 'कृष्ण ! मुधा मा वद ! यदि त्वम् अलीकं वदिष्यति, ताडयिष्यामि। मुखम् उद्घाटय। तव मुखान्तं निरीक्षे।' कृष्णः सस्मितं निज-मुखम् उदघाटयत्। यशोदा अतितराम् आघाताहता जाता। मुखाभ्यन्तरं तया यद् अवलोकितम्, सा नासीत् मृत्तिका, परञ्च वसुधा, सूर्यः, चन्द्रमा, नक्षत्राणि..., किम्बहुना, समग्रं जगत्। इदं सर्वं दृष्ट्वा किञ्चित् स्थिरताम् अवाप्तुकामा यशोदा कृष्णस्य मुखे गोकुलम् अवालोकयत्। अपि च, कृष्णस्य अनावृत- मुखस्य सम्मुखं स्थिताम् आत्मानमपि विलोकितवती। परम-दुःखिता यशोदा कृष्णं सोत्कण्ठम् आश्लिष्य प्रार्थितवती. ' कृष्ण ! कृपया निजमुखं पिधातु ... अनावृतम् इदं स्वीयं मुखं पिधातु कृपया... ! सस्मैरं कृष्णः स्वकं मुखं पिहितवान्। एकदा यदा यशोदा दधि-मन्थनं करोति स्म, तदा कृष्णः कक्षाभ्यन्तरम् आगतः। 'प्रिय-वत्स ! किं नवनीतं वाञ्छसि ...' यशोदा अपृच्छत्। कृष्णेन मूर्धावधूननं कृत्वा न्यक्कृतम्। कृष्णः स्व-मातुः दुग्धं पातुम् इच्छति स्म। ततः परम् , यशोदा तं दुग्धं पाययितुम् आरभत। किञ्चित् कालानन्तरमेव यशोदा ज्ञातवती यत् चुल्लिकोपरि प्रक्वथनार्थं स्थापितं दुग्धं पात्राद् बहिः निस्सरति। सा सहसा उत्थाय कृष्णं दूरे अपसारितवती। भवान् कल्पयितुं शक्नोति यत् कृष्णः कियान् रुष्टः सञ्जातः क्रोधाविष्टः सः तत्रस्थं सर्वमपि नवनीतं रंहसा खादितवान्। इतोऽपि अधिकतर- रुष्टः कृष्णः पार्श्वस्थं क्षीर-पात्रं विकीर्य मार्जारं क्षीर-पानार्थम् अनुज्ञातवान्। ततः परमसौ गृहात् तूर्णं निःसृतः। परावर्तितवती यशोदा अवालोकयत् यत् विकीर्णं दुग्धं मार्जारः अवलिहति स्म, नवनीतं किञ्चिदपि अवशिष्टं नासीत्। यशोदा वस्तुतः क्रुद्धा अजायत, 'गोपालेन अतितरां तोदिताएस्मि, नूनमसौ सम्यक्तया ताडनीयोएस्ति। ततः परमेव सः सुशिष्टो भविता'- सा विचारितवती। यशोदा गृहात् बहिः निर्गता। पूर्वतोऽपि भयत्रं दृश्यम् अपश्यत्। सा अपश्यत् यत् कृष्णः अवशिष्टं नवनीतं कपिभ्यः खादयति स्म। यशोदा क्रोधाग्निना ज्वलिता। यशोदा रज्जुना कृष्णं बद्ध्वा रज्जोः अपरान्तं उलूखलेन सार्धम् अबद्धात् ! ' उत्पातकारिन् बाल ! अधुना त्वं किं कर्तुं प्रभवसि – इति ज्ञास्यामि ! किञ्चित् कालार्थं अत्रैव तिष्ठ !!' प्रमुदितः बलरामः तन्मित्राणि च तत्र आगतानि। ते कृष्णं उपाहसन् ततः परं क्रीडितुं निर्गताः। वराकः कृष्णः ! सः अतितराम् एकाकी अवर्तत !! किञ्चित् कालानन्तरं कृष्णः सत्यं हि अतिरुचिम् अभजत। किं भवान् जानाति यत् तेन किं कृतम् ? सः पश्चवर्तिनम् उलूखलम् आकषञ्यन् चलितुम् आरभत। ततः प्रचलन् कृष्णः पार्श्वस्थं वृक्ष-द्वयम् अपश्यत। किं भवान् इदं ज्ञातुं नितरां उत्सुकः नास्ति यत् ततः परं कृष्णेन किम् आचरितम् सः केवलं वृक्ष-द्वयस्य मध्यात् प्राचलत् ! अपिच, उलूखलः तयोः मध्ये अवरुद्धः। कृष्णः मन्थरतया उलूखलम् आकर्षयत्। आह... ! ओह् ...!! उलूखलः साम्प्रतमपि अवरुद्धः एव आसीत्। कृष्णः स्व-पूर्ण-शक्त्या उलूखलम् आकषञ्यत। अपि च, ततः परं किं घटितम् वृक्षद्वयमपि उन्मूलितं जातम् ! अनुवर्तिनि क्षणे उन्मूलित-वृक्ष-द्वयात् देवौ समुत्पन्नौ। एतौ देवौ वृक्ष-योनौ समुत्पन्नार्थं शापितौ आस्ताम्। कृष्णः स्व-लीलया एव तौ शापमुक्तौ व्यदधात्। कृष्णाय निज-कृतज्ञतां समर्प्य तौ स्वर्गं परावर्तितौ। वृक्षयोः उन्मूलनस्य महारावं श्रुत्वा गोकुलस्य प्रत्येकमपि निवासी धावन्निव तत्रागतः। कृष्णः प्रहसन्निव तत्र स्थितः आसीत्।

## रम्या रामायणी कथा

मर्यादा पुरुषोत्तम श्री राम की जीवन गाथा

॥श्री राम कथा॥

**श्रीरामचन्द्रचरणौ मनसा स्मारामि**
**श्रीरामचन्द्रचरणौ वचसा गृणामि।**
**श्रीरामचन्द्रचरणौ शिरसा नमामि**
**श्रीरामचन्द्राचरणौ शरणं प्रपद्ये।**

अथ सुग्रीवमहाभागेन श्रीराममुक्तम्, यदा किष्किन्धायां मन्त्रिणः नगरं नृपं विना रिक्तमपश्यन्, तर्हि हठपूर्वकं किष्किन्धाराज्यसिंहासने मामेव नृपस्यरूपेऽभिषेकं कृतवन्तः। कालान्तरे यदा ज्येष्ठभ्रातृबाली तं राक्षसं वधयित्वा किष्किन्धानगरमागत्य मां राज्यसिंहसाने नृपस्यरूपे दृष्ट्वा अत्यन्तक्रोधवशीभूत्वा यं चिन्तनमकरोत् यत्, किष्किन्धाराज्यस्य लोलुपताकारणाद् तद्गुहाद्वारमवरुद्धं कृत्वा मया गुहाद्वारं शिलया रुद्धं कृतम्। अनेन बाली तत्रैव विनष्टं भविष्यति। मद्विचारेण सः एतादृशं विचार्य कृत्वा मां प्रति व्यर्थे शत्रुभावं धारणं कृतवान्।
हे राघव! सः बाली शत्रुसमं मां ज्ञात्वा सभामध्ये मत्ताडनमकरोत्। मद्भार्यामपि बलपूर्वकं स्वान्तःपुरमवरुद्ध्य मत्सहितं जामवन्तहनुमानादिमन्त्रिणं राज्याद्बहिर्कृतवान्। हे नाथ! तदा यावदेव तद्भयात् प्राणरक्षार्थं सर्वत्र मित्रैः सह धावन् आसीत्। हे भगवन्! अत्र सो महर्षिमतङ्गमहाभागस्य शापकारणाद् नागच्छत्।
एतच्छ्रुत्वा श्रीरघुनाथमहाभागस्य हृदये बहुदुःखं जातम्। श्रीरामः सुग्रीवमहाभागस्य हृदये भयं दूरीकुर्वन् कथितवान्, हे वानरराज! मद्वचनं श्रृणु, केवलमेकेन बाणादेव दुष्टबाली वधं करिष्यामि,यदि सः ब्रह्मदेवं वा रुद्रमहाभागं समीपमपि सः गमिष्यति तदपि तत्प्राणरक्षा भवितुं नारहति। 'सुनु सुग्रीव मारिहउँ बालिहि एकहिं बान। ब्रह्म रुद्र सरनागत गएँ न उबरिहिं प्रान' इति। हे सुग्रीव! अधुना आवां मित्रे स्वः। मद्विचारेण ये जनाः मित्रस्य दुःखं संदृश्य दुःखिनो न भवन्ति तदा तद्दर्शनमात्रेण महत्पातकं भवति। यः स्वगिरिसमं दुःखं रजकणतुल्यं तथा स्व-मित्रस्य रजतुल्यं दुःखं गिरिसमं मत्वा तद्दूरीकर्तुं भगीरथं प्रयासं करोति, स एव यथार्थमित्रं भवतीति मन्ये ।

**-क्रमशः**

आचार्य अरविंद पांडेय

# ॥ महाकालज्योतिर्लिङ्गकथा ॥

**( शिवपुराणान्तर्गतकथा )**
**सुनीश् नम्बूतिरि**

पुराणवर्णितानि द्वादशज्योतिर्लिङ्गानि भारते अद्यापि प्रसिद्धानि। तेषु तृतीयम् उज्जयिन्यां महाकालज्योतिर्लिङ्गम् इति सुप्रसिद्धं वर्तते। पुरा एव अवन्ती नगरी शिवभक्तानां बाहुल्येन प्रसिद्धा पावनी च आसीत। तत्र परमशैव एकः वेदनिष्ठायुक्तो ब्राह्मणः पार्थिवलिङ्गस्य नित्यम् अर्चनं करोति स्म। परमज्ञानी सः ब्राह्मणः शरीरयात्रावसाने शिवलोकं जगाम। तस्य महात्मनः चत्वारः पुत्राः देवप्रियः प्रियमेधः सुकृतः धर्मवाही ते च पितसदृशाः परमशिवभक्ता एवासन्। जनकेन अनुष्ठितं शिवपूजनं तेऽपि भक्त्या अनुष्ठानं कृतवन्तः। अनेन तेषां कीर्तिः सर्वत्र प्रसृता जाता। एवम् अवन्ती च ब्रह्मतेजोमयी जाता।।

अथैकदा ब्रह्मदेवात् वरं सम्पाद्य दूषणः नामकः एको महासुरः भूलोके धर्मक्षयाय प्रयत्नं कुर्वन् आसीत। धर्मतेजोमयी नगरी अवन्ती इति श्रुत्वा अवन्त्याः विषये तस्य मनसि आश्चर्यम् जातम्। अनेकेषां महापराक्रमशालिनां वधं कृतवानहं कथं शरीरबलहीनाः ब्राह्मणाः तत्र अधुनाऽपि निभय्येन वैदिकधर्मपालने शक्ताः भवन्ति इति चिन्ता तं बाधते स्म। सैन्येन सह अवन्त्याः नाशं कर्तुं निश्चितवान् सो महाखलः तत्र गत्वा साधुजनानां हननम् आरब्धवान्।।
भयभीताः जनाः आत्मरक्षणार्थं शिवार्चनतत्पराणां ब्राह्मणपुत्राणां समीपं गतवन्तः। शिवे अचञ्चलां भक्तिं कुर्वन्तः ते सर्वे नामसङ्कीर्तनं कृत्वा पार्थिवलिङ्गं परितः उपविष्टवन्तः। यथा दुष्टः दूषणासुर एतेषां शिवभक्तानां वधार्थम् आक्रोशं कृतवान् तावता महता शब्देन पार्थिवलिङ्गस्य स्थाने एको गती जातः ततः विकटरूपधारी महाकाल इति ख्यातो भगवान् परमेश्वर आविर्भूतः। सूर्योदयेन यथा अन्धकारस्य सम्पूर्णः नाशः जायते तथा दुष्टराक्षसानां नाशो जातः। क्षणाभ्यन्तरे दुष्टानां भस्मीकरणं परमात्माना महाकालेन कृतम्। आकाशात् हरिब्रह्मादयदेवाः पुष्पवृष्टिं चक्रुः। तदानीं द्विजाः विविधैः स्तोत्रैः शश्वं नमस्कृत्य एवं प्रोक्तवन्तः।।

**महाकाल महादेव दुष्टदण्डकरप्रभो।**
**मुक्तिं प्रयच्छ नः शम्भो संसाराम्बुधितः शिव॥**

**अत्रैव लोकरक्षार्थं स्थातव्यं हि त्वया शिव।**
**स्वदर्शकान्नरान् शम्भो तारय त्वं सदा प्रभो॥**

तेषां भक्त्या प्रसन्नः भगवान् शिवः तेभ्यः मुक्तिं दत्त्वा तस्मिन्नेव गर्ते भक्तानां रक्षणार्थं विलयं गतवान् तदेव महाकालेश्वरस्य ज्योतिर्लिङ्गं जातम्। अद्यापि उज्जयिन्यां महाकालेश्वरस्य दर्शनादेव सर्वाभीष्टसिद्धिं पापनाशं तथा अन्ते शिवलोकञ्च प्राप्स्यन्ति इत्येव भक्तानां विश्वासः।।

# लोमवती मधुकर्कटी, पश्चिमाद्रिपङ्क्तिषु नवीना मधुकर्कटी लब्धा।

**कोट्टक्कल।** तमिळ्नाट् राज्यस्य कोत्तगिरि वनेषु पूर्णतया लोमयुक्तां मधुकर्कटीं प्राप्ता। कोट्टक्कल् आर्यवैद्यशालायाः औषधोद्यान-गवेषणकेन्द्रस्य सस्यवर्गीकरणविभागस्य शास्त्रकारस्य डा.को एम् प्रभुकुमारस्य तथा डा.इन्दिरा बालचन्द्रस्य च नेतृत्वे प्रवृत्ते गवेषणे नवीना मधुकर्कटी प्रत्यभिज्ञाता । समान्य मधुकर्किटीतः विभिन्ना भवति एषा इति डा. इन्दिरा बालचन्द्रेन उक्तम्। पुष्पाणि पीतवर्णानि सन्ति। फलानां रूपं सामान्यमधुकर्कटीतः लघु भवति। नीलगिरि वनेषु अपूर्वाणां सस्यानां अध्ययने अस्ति अस्य अवगमनम्। एतत् सस्यं दक्षिण अमेरिक्कायां विद्यमान वास्कोण्सेल्लिया प्यूबसेन्स् अस्तीति निर्णीतमस्ति। मधुररसमपि न्यूनमेव। अस्यां जीवकम् सी, ए पोट्टास्यं इत्यादीनां बाहुल्यं वर्तते। अस्य पाप्पयिन् इति वस्तुना औषधनिर्माणं भवति। समुद्रतलात् 4900 तः 9800 उपरि भागे वर्तन्ते।मालियड्करा ए एन् एम् महाविद्यालयस्य सस्य शास्त्रविभागस्य अध्यापकः डा. सी एन् सुनिलः, पूर्व शास्त्रकारः नवीन कुमारः तन्त्रांश विभागस्य अङ्गः बिनु प्रकाशः इत्येते सन्ति गवेषकाः।

## वयं मिथः सोदराः भवेम

चन्दिरमातुलः मम सुन्दर मातुलः।
मातुः मातुलः तथापि मातामहस्यापि च ।।
आह्वयते मातुल इति मम वत्सल-पित्रापि च ।
पितामहापि सदा सादरं मातुलेति वदति।।
चन्दिरमातुलः सर्वेषां मातुलो जानाम्यहं ।
मातुः तुल्योऽयं मातुलेन स्निह्यते सर्वेवयम् ।
गायामः सानन्दं चन्दिरः अस्माकं मातुलः ।।
सर्वे वयं वत्सलाः शिशवः मातुलस्येव खलु ।
मामक गेहात् बहिः वर्तितैः सामान्य ग्रामजनैः।।
विद्यालये वर्तितैः सकलैः छात्रगणैः गुरुभिः।
आह्वयतेमातुलः इति मम चन्दिरमातुलः।।
मातुलवत्सलाः वयं मिथः सोदराः भवेम

# देशरक्षा परमोधर्मः

**पुनरालेखनम् - शान्ति सी**

पुरा काश्मीरेषु नन्दिनीदेवी नामिका काचित् ग्रामीणा वसति स्म। तस्याः चत्वारः पुत्राः आसन्। सर्वेषां शिक्षादिकं विधिवत् दत्वा सा पुत्रान् अपालयत् ।

राज्यसीमायां कालान्तरे कलहः सञ्जातः। सीमा रक्षणाय सैनिकानांद्दौर्लभ्यम् अभवत। अतःग्राममुख्यः ग्रामीणान् एवमवदत्? 'भो ग्रामीणाः देशस्य एषा दुर्दशा अभवत् । देश रक्षार्थम् उपायः एक एव। भवन्तः एकैकं युवानम् अवश्यं देश रक्षायै प्रेषयन्तु ' इति।

ग्राममुख्यस्य आदेशानुसारं नन्दिनीदेवी ज्येष्ठं तनयं प्रैषयत। एवमेव सर्वाभिः कृतम्। तथापि जन बलेन देशरक्षा अपूर्णीऽभवत। अतः सा शिष्टान् पुत्रान् आहूय अवदत् 'पुत्राः देशस्य रक्षणम् अस्माकं धर्मः। अतः देशरक्षणाय सीमानं ग्च्छन्तु इति। सुपुत्राः मातुराज्ञा पालने व्यग्राः खलु ? एकैकः क्रमेण सीमां प्राप्य देशरक्षणकर्मसु व्यापृतः अभवत् । तथापि सैनिकानाम् अपर्याप्तता अभवत् । पुनरपि ग्राममुख्यः ग्रामीणान् सीमारक्षणाय उद्बोधितवान्।

कथा

एतत् श्रुत्वा नन्दिनीदेवी रोदितुम् आरभत। तदा काचित् तामुपगम्य रोदनकारणमपृच्छत्। 'देश रक्षा परमोधर्मः । इतः परं प्रेषयितुं पञ्चमः पुत्रो नास्तीति मे दुःखम्' इति दृढमनसा नन्दिनीदेवी न्यवेदयत् ।

**अपि कनकमयी लङ्का न मे रोचते लक्ष्मण।**
**जननी जन्मभूमिश्च स्वर्गादपि गरीयसी ॥**


**प्रेरणाश्रोत**
जगदगुरू शंकराचार्य ज्योतिष्पीठ काशी पीठाधीश्वर ब्र.ली. स्वामी विद्यानंद सरस्वती जी महराज (मौनी जी), शाश्वतानन्द सरस्वती जी महाराज।

**संरक्षक मण्डल**
योग गुरू स्वामी आनन्द गिरि जी (बांध स्थित बड़े हनुमान जी )
डॉ भगवत् शरण शुक्ल
प्रोफेसर-व्याकरण विभाग-संस्कृतविद्या धर्मविज्ञान संकाय काशी हिन्दू विश्वविद्यालय वाराणसी
प्रमोद बंसल
निदेशक-महारानी चाय, प्रयागराज

**सलाहकार**
श्रीमती अनामिका चौधरी (सदस्य राज्य महिला आयोग)
डा. पुष्पा पाल (एमजीएम हास्पिटल)
- सुनील सराफ (अवतार केमिस्ट)
-पं. देवेन्द्र प्रसाद त्रिपाठी
-एसो. प्रो. डॉ. मुरली मनोहर द्विवेदी
-डॉ. शम्भुनाथ त्रिपाठी (अंशुल)
-डा. मोरार जी त्रिपाठी
-आचार्य कुशलदेव ( प्रवक्ता गुरुकुल महाविद्यालय ततारपुर हापुड़।)
-महेश जी कपूर
डा. कृष्णानन्द पाण्डेय
फादर - थॉमस कुमार
उपसम्पादक - विनम्र शुक्ल
विशेषवार्ताहरः
डॉ प्रदीप्त कुमार नंदः

**प्रयागराज ( इलाहाबाद )**
RNI No. : UPSAN/2018/76680
स्वामी मुद्रकः प्रकाशकश्च आनन्द नारायण शुक्ल द्वारा रमा प्रिन्टिग प्रेस, 53/25/1,ए बेली रोड, नया कटरा, प्रयागराज से मुद्रित एवं 1286बी/541बी नेहरू नगर मीरापुर, प्रयागराज से प्रकाशित।
मो.-9415633297
संपादक-राकेश शर्मा